# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




---

२७ वर्षे

२ अङ्कः

भाद्रपदपूर्णिमा वै० सं० २०२९

२३ सितम्बर, १९७२

## मूल्यप्रेषणसूचना—

२७ तमवर्षीयस्य पत्रिकाङ्कस्य वार्षिकं मूल्यमद्यावधि विभागे बहुभिर्ग्राहकैर्न प्रेषितमिति निवेद्यन्ते ते वार्षिकमूल्यप्रेषणाय ।

सम्पादकः

## लेखकेभ्यो निवेदनम्—

'सारस्वती सुषमा' इति पत्रिकायां नूतनतथ्याविष्कारका नूतनतथ्येन स्पष्टीकृततथ्या वाऽनुसन्धानात्मका निबन्धाः प्रकाश्यन्ते । ते सम्पादकः, 'सारस्वती सुषमा' वाराणसेयसंस्कृत-विश्वविद्यालयः, वाराणसी–२ इति सङ्केतेन प्रेषणीयाः सुधीभिः ।

प्रकाशितनिबन्धस्य मुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते लेखकाय, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवतीति ।

सम्पादकः

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

सह-सम्पादकः

श्रीव्रजभूषणत्रिपाठी, साहित्याचार्यः, एम० ए०




२७ वर्षे

२ अङ्कः

वार्षिकमूल्यं १० रूप्यकाणि

प्रत्यङ्कमूल्यं ३ रूप्यकाणि

# वाराणसेयसंस्कृतविश्वविद्यालयस्य विशिष्टं प्रकाशनम्

१. धर्मशास्त्रीयव्यवस्थापत्रसंग्रहः—( धर्मशास्त्रम् ) १०.००
सम्पादकः—डॉ० सुभद्रझाः

२. गर्गसंहिता—( पुराणम् ) १०.००
सम्पादकः—श्रीविभूतिभूषणभट्टाचार्यः

३. बृहच्छब्देन्दुशेखरः—( व्याकरणम् ) ४५.००
श्रीनागेशभट्टविरचितः
सम्पादकः—डॉ० सीतारामशास्त्री
[ ग्रन्थोऽयं त्रिषु भागेषु विभक्तः ]

४. पदवाक्यरत्नाकरः—( न्यायशास्त्रम् ) १५.००
श्रीगोकुलनाथोपाध्यायविरचितः,
श्रीयदुनाथमिश्रकृतगूढार्थदीपिकासहितः
सम्पादकः—श्रीनन्दीनाथमिश्रः

५. काव्यप्रकाशः—१-५ उच्छ्वासाः ( अलङ्कारशास्त्रम् ) ८.००
आचार्यमम्मटकृतः, श्रीगोकुलनाथोपाध्यायविरचितः
काव्यप्रकाशविवरणयुतः
सम्पादकः—कविशेखरबदरीनाथझाः

६. वाक्यपदीयम्—( द्वितीयकाण्डम् ) ( व्याकरणम् ) २८.००
आचार्यभर्तृहरिविरचितम् , पुण्यराज्यकृतविवरणसहितम्
श्रीरघुनाथशर्मकृत 'अम्बाकर्त्री' टीकासहितम् ।
सम्पादकः—श्रीरघुनाथशर्मा

७. सूक्तिमुक्तावली—( गद्यकाव्यम् ) ७.५०
श्रीगोकुलनाथोपाध्यायविरचितः
सम्पादकः—श्रीभूपनारायणझाः

८. श्रीमद्भगवद्गीता—( १-६ अध्यायाः ) ५.५०
भगवद्भास्करभाष्ययुता
सम्पादकः—डॉ० सुभद्रझाः

# विषय-सूचिका





# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

| २७ वर्षः | भाद्रपदपूर्णिमा, सं० २०२९ | २ अङ्कः |
|---|---|---|

# बादलस्तम्भलेखस्य द्रविडनाथः

डॉ० अशोकशास्त्री

पुराणेतिहासविभागाध्यक्षः, वा० सं० वि० वि०

वङ्गदेशस्य पालसम्प्रदायानां शासकवर्गाणां मध्ये देवपालस्य नाम सर्वप्राथम्ये-नैतिहासिकवर्गस्य दृष्टिमाकर्षति, अस्य चरित्रमाहात्म्येन शासनकौशलेन च। अस्य पितुर्धर्मपालात् स विस्तीर्णं भूखण्डं प्राप। एवं तच्च राज्यं सम्यक्तया तेन पुष्टिं नीतं वर्धितं च। तस्य कीर्तेर्माहात्म्यं भारतवर्षस्य बहिर्भागेऽपि प्रचारितमभूत्। एशियामहादेशस्य दक्षिणपूर्वभूभागे जामायाम्, सुमात्रायां तस्य प्रभावो बाहुल्येन प्रत्यक्षीक्रियते। शैलेन्द्राख्येन राजवंशेन तस्य सांस्कृतिकनैकट्यं सुविदितमेव। तदानीन्तनशिलालेखा विषयेऽस्मिन् प्रमाणमावहन्ति। किन्तु देवपालेन सह तात्कालिकस्य दक्षिणभारतशासकस्य कीदृशः सम्बन्ध आसीदितीदमधिकृत्य विद्वत्सु वितण्डा अद्यापि प्रचलति। जटिलेयं समस्या ननु। अत्र साक्ष्यादीनि सर्वाणि संगृह्य वस्तुयाथार्थ्यनिर्णये एव प्रयास आश्रीयते।

नारायणपालस्य बादलस्तम्भशिलालेखे[1] एकः श्लोको दृश्यते, स त्वित्थम्—

उत्कीलितोत्कलकुलं हृतहूणगर्वम्।
खर्वीकृतद्रविडगुर्जरनाथदर्पम् ॥

अनेन श्लोकेन देवपालस्य बहून्येवोल्लेख्यानि कार्याणि समुपस्थाप्यन्ते। बहूनां मध्ये द्रविडनाथस्य दर्पस्तेन खर्वीकृत इत्यत्रावधानं दातव्यम्। प्रसंगेऽस्मिन्निदं वक्तुमुचितं भवति यद् डॉ० हेमचन्द्ररायचौधुरीमहोदया अत्र 'द्राविड'[2] इति पठन्ति, तत्तु

१. एपिग्राफिया इण्डिका, वॉल्युम २, पृ० १६०-१६७।

२. कृष्णस्वामी आयङ्गारः, कोमेमोरेसन वॉल्युम, १९३६, पृ० १९८।

प्रामादिकम् । अस्य श्लोकस्य द्रविडपदं बहूनामैतिहासिकपण्डितानां मतभेदस्य कारणतया पर्यवसितम् । राखालदासबनर्जी निरूपयति "उत्कलाक्रमणं किञ्चिद् नवीनम्, किन्तु हूणैः सह युद्धं मुङ्गेरशिलालेखे उल्लिखितैः कम्बोजैः सह युद्धमेव; नान्यत् किञ्चित् । कस्माच्चित् स्वतन्त्रसूत्राद् वयं जानीमहे यद् द्रविणैः (राष्ट्रकूटैः)[१] सह युद्धमभूत् ।" स्वतन्त्रसूत्रपदेन सः अमोघवर्षस्य सिर्उर्लेखं प्रति दृष्टिमाकर्षति[२] । अस्मिन् लेखे राष्ट्रकूटैः सह पालानां संघर्षविवरणं प्रदत्तम्, तत्तु देवपालसमकालीनामोघवर्षसमये विज्ञापितम् । अतो राखालदासबनर्जीमते द्रविडनाथो देवपालस्य समकालीनो राष्ट्रकूटाधिपतिमेव, नापरः कश्चित् । प्रमोदलालपालमहोदया अपि द्रविडनाथपदेन राष्ट्रकूटाधिपतिरेव मन्यन्ते[३], किन्तु डॉ० विनयचन्द्रसेनमहोदया अस्मिन् प्रसङ्गे प्रथमामोघवर्षस्य संजनलेखे[४] द्रविडनृपतीन् प्रति दृष्टिमाकर्षयन्त एते द्रविडनृपतयः संजनलेखे समुद्धृताः केरलपाण्ड्यराजा एव भवितुमर्हन्तीति कथयन्ति[५] । डॉ० हेमचन्द्रराय-चौधुरीमहोदयेनापि राखालदासबनर्जीमहोदयस्य मतं न समर्थ्यते । तेनोक्तम् 'द्रविडनाथपदेन न केवलं राष्ट्रकूटाधिपतय एव बोद्धव्याः, एतेन केचित् तामिलसामन्तनरपतयोऽपि ग्रहणीयाः ।"[६] डॉ० रमेशचन्द्रमजूमदारमहाभागा अस्यैव मतस्य सम्पुष्टिं कुर्वन्तः कथयन्ति, अतो नेदमसङ्गतं यद् देवपालेन पराभूता द्रविडनरपतयस्तस्य समकालीनः पाण्ड्यराजः श्रीमान् श्रीवल्लभ एव" ।[७] अर्थाद् डॉ० हेमचन्द्ररायचौधुरीमहोदयस्य मतं संपोषयन्तः डॉ० रमेशचन्द्रमजूमदारमहोदयाः सिन्नमानूरलेखावलीद्वारा तथा नेदुन्जदैयनस्य मेल्वीकुडीलेखमाध्यमेन स्वयुक्तिमधिष्ठापयन्ति ।

किन्तु द्रविडनृपेण सह पाण्ड्यराजस्यैकात्मीकरणं न सम्भवतीतीदं प्रतिपादयितुमेव वयमत्र क्रमं बध्नीमः ।

सिन्नमानूरलेखानुसारेण कलिङ्गादिभिः सह मगधमपि पाण्ड्याधिपतिर्विजिग्ये इति प्रतिपादितम् । किन्तूक्तपण्डितद्वयस्य मते यतो मगधः पालसाम्राज्यान्तर्भूत आसीत्, अतोऽस्मिन् शिलालेखे मगधस्योक्तिर्नूनं पाण्ड्यराजसमकालस्य पालराजवंशस्य कस्यचिद् द्योतिका । एच० कृष्णशास्त्रिमतेन यो विजयोऽस्मिन् प्रसङ्गे समुत्कीर्त्यते, स त्वित्थंभूत एव । "यः [ परचक्रकोलाहलः ] सूर्यवद्दीप्यन् भयङ्करतीक्ष्णशरवर्षणात् तद्विरुद्धे

---

१. मेमयर्स आफ दि एसियाटिक सोसाइटि आफ बङ्गाल, वॉल्युम ४, नं० ३, पृ० ५६ ।

२. इण्डियन् एन्टिक्यौरी, वॉल्युम १२; पृ० २१८ ।

३. पि० एल० पाल, दि आर्ली हिष्ट्री आफ बङ्गाल, वॉल्युम १, पृ० ४३ ।

४. एपिग्राफिया इण्डिका, वॉल्युम १८, पृ० २४६ ।

५. वि० सि० सेन, सम हिस्टरिक्यल आसपेक्टस् आफ इन्सक्रिप्सन्स् आफ बङ्गाल, पृ० १४४ ।

६. कृष्णस्वामी आयेङ्गारः, कोमेमोरेसन वॉल्युम, १९३६, पृ० १९९ ।

७. आर० सि० मजुमदार, हिस्ट्रि आफ बङ्गाल, वॉल्युम १, पृ० १२१ ।

युद्धार्थमागतान् गङ्गपल्लवचोलकलिङ्गमगधेत्यादीन् राज्ञोऽधिजिगाय। एवं च शोणितनद्यामप्रवाहयत् तान्।"[1]

तत्रोल्लिखिता मगधा पाला एव, नान्ये। यद्यपि सिन्नमानूरलेखे श्रीमच्छ्रीवल्लभेन मगधाः पराभूता इति साक्ष्यमस्ति, तथापि बादलस्तम्भशिलालेखे देवपालो द्रविडनाथं विजिग्ये इत्येतदेव समुल्लिखितमस्ति। मजूमदाररायचौधुरी इत्यादीनां मतेऽयं द्रविडनाथः पाण्ड्य एव यदि स्यात्, तर्ह्यस्य मतभेदस्य समीचीना व्याख्या कथं ताभ्यां न प्रदत्ता? डॉ० मजूमदारमहोदया विज्ञापयन्ति—'अस्मिन् युद्धप्रसङ्गेऽन्याऽपि काचन घटना प्रादुरभूत्, या च पाण्डुराजस्य न तादृशी हितकरी आसीत्।' किंतु इदं च न समूलत्वेन प्रतिपादितम्, अपरा घटना काऽऽसीदित्यस्मिन् प्रसङ्गे न किमपि तेनोक्तम्[2]। सिन्नमानूरलेखे यदि विश्वासो दीयेत, तर्हीदमेव प्रतीतं भवति यत् श्रीमच्छ्रीवल्लभेन सह राष्ट्रकूटानां न किञ्चिद् वैमनस्यम्, परन्तु पाण्ड्यनृपैः सह तस्य विरोध आसीत्, अतो राष्ट्रकूटैः सह युद्धार्थमेषां पाण्ड्यादीनां कश्चित् समन्वयो भवतीत्यस्मिन् प्रसङ्गेऽयं शिलालेखो न किञ्चिदपि प्रमाणमावहति।

डॉ० रायचौधुरी—डॉ० मजूमदारमहोदयानां मते ईसवीय ८१५खिष्टाब्दात् ८६२ खिष्टाब्दपर्यन्तं पाण्ड्यनृपस्य श्रीमतः श्रीवल्लभस्य राज्यकालः। मजूमदारमहोदयस्य मते देवपालः ८५० खिष्टाब्दपर्यन्तं राज्यधुरं वहति स्म। देवपालस्य समयनिर्णयप्रसङ्गे मजूमदारमहोदयेन यत् सिद्धान्तितम्, तदेव सत्यमिति स्वीकृत्याप्येकः प्रश्नः पण्डितचित्तमाकुलयति यत् पालैः सह पाण्ड्यानां विवादः ८५० खिष्टाब्दात् प्रागेव संघटित इति कथं निर्विवादं ज्ञायते? ८५० इत्यारभ्य ८६१ इत्यस्यान्तर्वर्तिनि कालेऽपि स विवादो भवितुमर्हति स्म। यदि च ८५० इत्यस्मात् परत एवायं विवादः संघटिष्यत तर्हि पाण्ड्यनृपेण पराभूतनृपतिर्न कदापि देवपालः, किन्त्वपर एव कश्चिदित्यस्मिन् विषये सन्देहस्य लेशोऽपि न वर्तते।

परन्तु दूरदक्षिणप्रदेशेऽपि देवपालस्याधिपत्यं नूनं नासमीचीनमिति मतस्य पोषणाय डॉ० रायचौधुरीमहोदया देवपालस्य मुंगेरलेखस्य श्लोकं समुत्थापयन्ति। स त्वीदृक्—

आगङ्गागममहीतात् सपत्नशून्यम्
आसेतोः प्रथितदशास्यकेतुकीर्तेः।
पूर्वामावरुणनिकेतनाच्च सिन्धोः
आलक्ष्मीकुलभवनाच्च यो बुभोज॥[3]

---

१. साउथ इण्डियान इन्सक्रिप्सन्स्, वॉल्युम ३, पृ० ४६१।
२. आर० सी० मजूमदार, हिस्ट्री आफ बङ्गाल, वॉल्युम १, पृ० १२०।
३. इण्डियन् एन्टिक्यौरी, वॉल्युम २१, पृ० २५४-२५७।

अनेन इदं स्पष्टं प्रतीयते यदुत्तरस्यां दिशि हिंमालयादारभ्य दक्षिणसागरपर्यन्तं विस्तृतं भूभागं देवपालोऽशात्। किन्तु नेयं वस्तुस्थितिः, न च भूतार्थव्याहृतिः। यथा तथा वा भवतु। ईदृशः समुच्छ्वासो न दुर्लभो यो राज्ञां गौरवाधिक्यं सूच्यते। यथास्य समर्थने दृढमन्यत् किञ्चित् प्रमाणं न विद्यते, तत्रेदं सम्पूर्णतयोपेक्षितव्यम्। प्रमाणभूयिष्ठमेव साक्ष्यमैतिहासिकैर्गृह्यते। पालवंशप्रतिष्ठापकेन गोपालेन समग्रा उर्वी चतुरन्तसागरपर्यन्ता हिमवद्-विन्ध्यकुण्डला परिपालिता[1] इति यत् पाललेखे स्वीकृतम्, तत् किमिदं न स्तुतिमात्रम्? आक्षरिकार्थे इतिहासदृष्ट्येदं न ग्रहणीयम्। यदि मुंगेरलेखस्य श्लोकोऽयं देवपालस्य राज्यस्य सुविस्तीर्णां परिधिं घोषयति, तर्हि सिन्नमानूरलेखदृष्ट्या मगधानामुपरि पाण्ड्यस्य साफल्यं कथं सम्भवति? तथा च मुंगेरलेखस्यायमेवोच्छ्वास एव न याथार्थ्यमावहतीत्यत्रापरमपि प्रमाणमस्ति। नारायणपालस्य बादलस्तम्भशिलालेखे देवपालस्य राजत्वसीमा न तथा विस्तृत इति कथितमस्ति, यथा–

"आ रेवाजनकान् मतंगजमदस्तिग्मच्छिलासंहतेः।
आ गौरीपितुरीश्वरेन्दुकिरणैः पुष्यत्सितिम्नो गिरेः॥"[2]

देवपालस्य साम्राज्यं यद् हिमालयादारभ्य विन्ध्यपर्वतपर्यन्तं विस्तृतमासीत्, तत्र तु श्लोकोऽयं प्रमाणम्। का कथा अपरसाक्ष्यस्य मुंगेरलेखस्यान्यस्मिन्नंशे स्पष्टतया कीर्तितमस्ति यद् देवपालस्य राज्यं विन्ध्यपर्वतपर्यन्तं विस्तृतमासीत्।[3]

तेषां मतस्य संपोषणाय डॉ० रायचौधुरी[3]—डॉ० मजूमदारमहाभागा नेदुनजदैयन इत्यस्य राजत्वकालस्य तृतीयवर्षे प्रसारितं भेल्विकुडिलेखं[4] प्रमाणं मन्यन्ते, अस्य लेखे यत् साक्ष्यं तत् प्रमाणमप्रमाणं वा इत्यस्माद् विचारात् प्रागिदं तु न विस्मर्तव्यं यदयं लेखः ७६६–७७० ईसवीये प्रसारितः। अतः सिन्नमानूरलेखोद्धृतस्य श्रीमतः श्रीवल्लभस्य (८१५–८६२) बहुकालात् प्रागेव इत्यस्य भेल्विकुडिलेखः प्रसारित आसीत्। भेल्विकुडिलेखे इदमेवोल्लिखितं वर्तते यत् "वैद्यकवंशावतंसमरौगादिः [ यस्य सेनाः वज्रवत् युयुधिरे ] कठिनाहवे .... ... .... .... .... .... वेनवाइ इति स्थाने पूर्वनृपतीनां अपरेषां नृपसमूहानां च चमूः पराजितवान् .... .... .... .... .... अस्मिन्नवसरे, गङ्गराजस्य सुन्दरी कन्या गृहीता पाण्ड्यराजाय कोंगारकोणाख्याय प्रदत्ता च।[5]

अस्मादिदमनुमितं भवति यत् पूर्वराजैः सह गंगानां पाण्ड्यानां च काचिद् मैत्री अभूत्, किन्तु तथाप्यस्य लेखस्य विश्लेषणेनेदं स्पष्टतया वक्तुं शक्यते यद् गंगराजा ये

---

१. "विजित्य येनाजलधर्वसुन्धराम्" देवपालस्य मुङ्गेरलेखः।

२. बादलस्तम्भलेखः, श्लो० ५।

३. "भ्राम्यद्भिर्विजयक्रमेण करिभिः स्वामेव विन्ध्याटवीम्।
उद्दामप्लवमानबाष्पपयसो दृष्टाः पुनर्बान्धवाः।" ( श्लो० १३ )

४. एपिग्राफिया इण्डिका, वॉल्युम १७, पृ० २९१-३०९।

५. एपिग्राफिया इण्डिका, वॉल्युम १७, पृ० ३०८-३०९।

तावत् महासङ्घान्तर्गता आसन्नित्युच्यते, ते त्वस्मिन् रणे सहयोगं न कृतवन्तः। अतो डॉ० मजूमदारमहोदयस्य मतेन 'इमे राजानः परस्परं मिलित्वा महादलमेकं निर्मितवन्तः' इति यत् सिद्धान्तितम्, तत्तु न समूलकमिव, यतो मजूमदारमहोदयो भेल्विकुडिलेखादारभ्य श्रीमारश्रीवल्लभस्य सिन्नमानूरलेखं यावत् पञ्चाशद् वर्षकालं न सम्यग् व्याख्यातवान्। अस्मिन् समये यद्येतेषां नृपाणां महासङ्घः सङ्घटितोऽभूत्, तर्ह्यस्य सङ्घस्य गठनम्, परिचालनम्, अभ्युदयमुद्देश्यमितिहासं च कथं न स सम्यग् विश्लिष्टवान्?

अस्मिन्नेवावसरे इदं चास्माभिः प्रस्तूयते यत् श्रीमारश्रीवल्लभमुल्लिख्य मगधैः सह तस्य युद्धं वर्णयित्वा एव मजमूदारमहोदयो भेल्विकुडिलेखं प्रत्युत्प्लुत्य गच्छति, कथयति च "पाण्ड्यराजाः कदाचित् ईदृशानां पूर्वनृपाणां महासङ्घान्तर्गता आसन्। इमे एव पूर्वराजा वेनवाइ इत्याख्यस्थाने राष्ट्रकूटाधिपतिं प्रथमकृष्णं पराजितवन्तः।"[1] अस्माद् विवरणाद् ननु प्रामादिकी धारणा जायते, जन इत्थं चिन्तयितुं शक्नोति यद् भेल्विकुडिलेखः श्रीमारश्रीवल्लभमेव सूचयति। यद्यपि भेल्विकुडिलेखात् पञ्चाशद् वर्षानन्तरमेव श्रीमारश्रीवल्लभः प्रादुरभूत्। अतो देवपालस्य राजत्वसमये भेल्विकुडिलेखं प्रति तस्य योग ऐतिहासिकदृष्ट्या प्रामादिक एव। इदं च न कोऽपि वक्तुं शक्यते यदस्मात् प्राक् पूर्वराजानां पाण्ड्यनृपाणामन्येषां चैको महान् संघः प्रतिष्ठापित आसीत्। तस्माच्च सङ्घात् श्रीमारश्रीवल्लभ आत्मानं प्रतिसंहृतवान्। एवं च तस्य प्राक्तनैर्मित्रैः सह युयुधे।

प्रसंगेऽस्मिन्निदमपि वक्तव्यं यद् भेल्विकुडिशिलालेखानुसारेण राष्ट्रकूटैः सह केपाञ्चनान्येषां नृपतीनां युद्धमभूत्। एवं च सिन्नमानूरलेखाः पञ्चाशद्वर्षादारभ्य शतवर्षादनन्तरे काले श्रीमारश्रीवल्लभस्य कीर्तिगाथां प्रकाशयन्ति। भेल्विकुडिलेखैः सह सिन्नमानूरलेखस्य संबन्धस्थापनावसरे अस्याभ्यन्तरे यदि कश्चिद् नृपमहासङ्घा स्थापितोऽभवत्, तर्हि तस्य ग्राह्याणि प्रमाणानि कुत्र? ऐतिहासिकसाक्ष्येष्वसत्सु नृपमहासङ्घोऽस्मिन् समये कथं स्थापितः स्यादिति त्वस्माकं बुद्धिस्तत्र न चलति।

अपरपक्षे भेल्विकुडिलेखे उल्लिखितपूर्वराजपदेन पालवंशीया नरपतय एव बुद्ध्यन्त इत्यत्र तु महान् सन्देहः। डॉ० राजचौधुरीमहोदयेनोक्तम् "पूर्वराज इत्युक्तिः पालवंशीयानां नृपाणां शिलालेखेषु ताम्रपट्टेषूट्टंकितम् पूर्वक्षितिधरपदं सूचयति। एवं च पूर्वराजपदं नूनं सामन्तनृपैः सह पूर्वभारतशासकानां पालराजानामेव बोधकम्।"[2] अत्रेदं विचारणीयं यद् रायचौधुरीमहोदयेन पूर्वक्षितिधर इति यः पाठः समुदाहृतः, स तु प्रामादिक एव। वस्तुतस्तु प्रकृतः पाठः पूर्वक्षितिभ्र इति, न तु पूर्वक्षितिधर इति। तथा च निम्नोद्धृतांशान् प्रति पाठकानां दृष्टिराकृष्यते—

---

१. आर० सी० मजूमदार, हिस्ट्रि आफ बङ्गाल, वॉल्युम १, पृ० १२०।

२. कृष्णस्वामी आयङ्गारः, कोमेमोरेसन वॉल्युम, १९३६, पृ० १९९।

तस्मात् पूर्वक्षिभ्रान्निधिरिव महसां राष्ट्रकूटान्वयेन्दोः ।
तुंगस्योत्तुंगमौलेर्दुहितरि तनयो भाग्यदेव्यां प्रसूतः ॥[१]

अयमंशस्तृतीयविग्रहपालस्य आयगाछीलेखे[२] तथा मदनपालस्य मन्हरिलेखेऽपि स्थानं लभते[३]। अस्यांशस्य व्याख्यायां पण्डिता भिन्नमतं पोषयन्ति। कीलहर्णमहोदयस्य मतेनास्य व्याख्या ईदृशी—"यथा आलोकसङ्घाताः पूर्वाचलाद् उदयन्ति, तथा पूर्वराजात् जात आसीद् एकः पुत्रः, स तु उत्तुङ्गमौलेः तुङ्गस्य कन्यायां भाग्यदेव्यां प्रसूतः। अयं तुंगः राष्ट्रकूटवंशस्य ललामभूत आसीत्।" गौडलेखमालाग्रन्थस्य सम्पादकेन अक्षयकुमारमैत्रेयेण नवीनं किञ्चिद् व्याख्यानं समुपस्थापितम्। तन्मते पूर्वक्षितिध्रपदम्, न तु पूर्वेषां राज्ञां वाचकम्। स कथयति "पूर्वस्यां दिशि लब्धपदस्य सूर्यस्य औज्ज्वल्यं वहन् एकः पुत्रस्तस्य एवं भाग्यदेव्यां जात आसीत्। इयं भाग्यदेवी उत्तुंगमौलेः उत्तुंगदेवस्य कन्या। उत्तुंगदेवस्तु राष्ट्रकूटवंशस्य चन्द्र इव।"[४] अतः पूर्वक्षितिध्रपदं पूर्वाचलवाचकमात्रमेव, न तु पूर्वेषां राज्ञां वाचकम्। उपमामात्रमेवानेन ध्वन्यते, सादृश्यं त्वत्र सूर्येण सह द्वितीयगोपालस्य राजकवेरयमेवाभिप्राय आसीद् यद् द्वितीयगोपालस्य सिंहासनारोहणेन पालवंशस्य सौभाग्यरविर्दीप्त्या समुदेति स्म। एवं च यथा तपति घर्मांशौ तमो न आविर्भविष्यति, तथा अस्य पराक्रमशालिनो द्वितीयगोपालस्य शासनेन राज्यात् कालुष्यमपगतमासीत्। प्राचीनभारतवर्षस्य कविभिः 'पूर्वाचलादुदयति सूर्यः' इति भावना नूनं समादृता। अस्माभिस्तु कुमारगुप्तबन्धुवर्मणो मन्दासोरशिलालेखस्य कश्चनांशविशेषः प्रसंगेऽस्मिन् समुत्थाप्यते—

"यः प्रत्यहं प्रतिविभक्त्युदयाचलेन
विस्तीर्णतुंगशिखरस्खलितांशुजालः।"[५]

यदि तु युक्तिदृष्ट्या 'पूर्वक्षितिध्र' इति पदेन पूर्वो राजा एव ग्रहीतुमावश्यकः, तर्हि त्विदमवधेयं यदिदं केवलं राज्यपालस्य बोधकम्। पालवंशेषूपलब्धेषु सर्वेषु शिलालेखेषु राज्यपालात् प्राचीने काले केचन पूर्वशूरिण इत्थं न वर्णिता आसन्। 'पूर्वक्षितिध्र'पदं भारतवर्षस्य पूर्वदेशस्य पालवंशीयानां नृपाणां बोधकं चेत्, भेल्विकुडिशिलालेखे (ई० ७६६-७७० ) उल्लिखितेन पूर्वक्षितिध्रपदेन सह तेषामैक्यं न संभवति, स्वतन्त्रप्रमाणाभावात्। केवलमिदं त्वनुमानमेव। अतोऽस्मिन् विषयेऽनेकेषां वैमत्यं भवितुमर्हति।

---

१. प्रथममहीपालस्य वाणगडलेखः, जर्नल आफ दि एसियाटिक सोसाइटी आफ बङ्गाल, वॉल्युम ६१, पृ० ७७-८७।

२. इण्डियन् एन्टिक्यौरी, वॉल्युम २१, पृ० १००।

३. जर्नल् आफ दि एसियाटिक सोसाइटी आफ बङ्गाल, वॉल्युम ६९, पृ० ६९।

४. गौडलेखमाला, पृ० ९९।

५. फ्लीट, कर्पास इन्सक्रिपसनुम् इण्डिकेरूम, वॉल्युम ३, पृ० ८१।

अपि च प्रथमकृष्णे राष्ट्रकूटाधिपतौ पालाः राष्ट्रकूटैः सह सङ्घर्षलिप्ता बभूवुर्न वेत्यस्मिन् विषये महान् सन्देहो जायते। राष्ट्रकूटाधिपतेः प्रथमकृष्णस्य सेनान्या सह पालवंशीयानां नृपाणां महान् विवादोऽभूदित्यस्मिन् विषये भेल्विकुडिलेख एव प्रमाणमिति केषाञ्चन यदाग्रहातिशयं तत्तु सर्वथा परिहर्तव्यमनुसंधानसंचालकैर्मनीषिभिः।[1] डॉ० ए० एस० आल्तिकरमहोदयस्य मतानुसारेण ईसवीये ७५६ वर्षे प्रथमकृष्णस्तस्य भ्रातुष्पुत्रात् दन्तिदुर्गाद् राज्यं लेभे।[2] एवं स प्रथमकृष्णो नूनं ७७२ ईसवीयवर्षात् ( यदा तालेगाओन्-लेखाः प्रवर्तिता आसन्[3] ) प्रागेव पञ्चत्वं गतः, यतोऽस्मिन् वर्षे तत्पुत्रेण ध्रुवेण प्रचारिते पिम्पेरीलेखे प्रथमकृष्णो जीवति, अथवा राज्यं शास्ति इत्युल्लेखो नास्ति।[4] अत्रेदं त्ववधेयं यत् सर्वे उपलब्धा राष्ट्रकूटलेखा न कामपि घटनां विवृण्वन्ति, यत्र राष्ट्रकूटाधिपतेर्ध्रुवात् पूर्वमेव पालैः सह तेषां सङ्घर्षोऽभूदिति प्रमाणं लभ्यते। ध्रुवस्याक्रमणसमयेऽपि ध्रुवेण गौडराजस्ताडितः सन् गङ्गायमुनातटपर्यन्तं पलायितवान्। स तु पालवंशीयः कोऽपि नृप इत्थं न निश्चितम्, यद्यपि संभावना तत्र वर्तते। प्रथमकृष्णस्य समये यदि पालास्तेषां शासनं सुप्रतिष्ठितमकुर्वन्, तथापि तेषां पालवंशीयानां प्रथमो राजा गोपालो दाक्षिणात्यं वेनवाइ इत्याख्यस्थानं गत्वा सुप्रतिष्ठितै राष्ट्रकूटैः सह युद्धमकरोदिति तु प्रामादिक एव। वस्तुतस्तु पालवंशीयौ प्रथमद्वितीयराजानौ गोपालधर्मपालाख्यौ स्वप्रान्ते स्वकीयं शासनं सुदृढं कर्तुं प्रयतेते स्म। अनेन प्रयत्नेन पूर्वोत्तरभारतवर्षे तेषां प्रतिष्ठां दृढीकर्तुं व्यापृतावास्ताम्।[5] पक्षान्तरे इदं वयं जानीमो यद् धर्मपालराष्ट्रकूटसंबन्धः सुस्पष्टं सूचयति, यदिमे राष्ट्रकूटा एव प्रथममुत्तरस्यां दिश्यागत्य आक्रमितुं क्रमं बबन्धुः। तथा च गुर्जरैः सह पालैः सह च प्रतिद्वन्द्विताम कुर्वन्। धर्मपालो भारतवर्षस्य दक्षिणप्रदेशे बहु दूरं गत्वा राज्यं विजिग्ये। एवं चात्मानं प्रतिष्ठापयामासेत्यस्मिन् विषये न सुस्पष्टं प्रमाणं दरीदृश्यते। बम्बई-प्रदेशान्तर्वर्तिनं गोकर्णाख्यं स्थानं धर्मपालो जित्वा स्वशासनं प्रतिष्ठापयामासेति[6] यदपि सत्यम्, तथापि प्राचीनो गोकर्णाख्यभूभागो कस्मिन् स्थलेऽवस्थित आसीदित्यत्र महान् तर्कोऽस्ति। ये ऐतिहासिका गोकर्णाख्यभूमिं नेपालप्रान्ते वर्तत इति मन्यन्ते, तेषां मतमपि नात्रोपेक्षितव्यम्।

वयं त्वेतत् प्रतिपादयितुं यतामहे यत् केनापि पाण्ड्यराजेन देवपालः पराभूत आसीदित्यस्य मतस्य समर्थनाय तादृशी प्रबला युक्तिर्नास्ति। सिन्नमानूरलेखे समुद्धृतानां

---

१. कृष्णस्वामी आयङ्गारः, कोमेमोरेसन वॉल्युम, १९३६, पृ० १९८।
२. ए० एस० आल्तेकर, दि राष्ट्रकूटस एण्ड देयार टाइम्स्, पृ० ४४।
३. एपिग्राफिया इण्डिका, वॉल्युम १०, पृ० ८१।
४. ए० एस० आल्तेकर, दि राष्ट्रकूटस एण्ड देयार टाइम्स्, पृ० ४५।
५. "भोजैर्मत्स्यैः समद्रैः कुरुयदुयवनावन्तिगन्धारकीरैः"
( धर्मपालस्य खालिमपोरलेखः, एपिग्राफिया इण्डिका, वॉल्युम ४, पृ० २४८ )
६. इण्डियन् एन्टिक्यौरी, वॉल्युम २१, पृ० २५४-२५७।

नाम्नां मध्ये मगधस्य उल्लेखो नेदं प्रमाणयति यद् मगधराज एव तत्र समुपस्थितः। डॉ० रायचौधुरीमहोदयः स्वयं ह्यस्य मते सन्देहं परिपुष्णाति, कथयति च "सिन्नमानूरलेखादिदं स्पष्टं प्रतिभाति यत् तामिलप्रदेशे ईसवीयनवमे शतके मगधाद् योद्धारः सम्मिलिता आसन्।[१]"

भारतवर्षस्य कस्मिंश्चिदपि प्रान्ते योद्धृरूपेण मागधानामुपस्थितिर्नासमीचीना। यदि तावत् प्रबलपराक्रमशाली देवपालदेवो यथार्थमेव पाण्ड्यनृपैः पराभूतः, तर्हि पाण्ड्यनृपाणां लेखावल्यामवश्यमेव देवपालस्य नाम स्पष्टतयोल्लिखितं स्यात्। पाण्ड्यराजद्वारा देवपाल-पराजयः पाण्ड्यानां गौरवास्पदम्। यद्यपि अमोघवर्षस्य संजनलेखे धर्मस्य (धर्मपालस्य) नाम विद्यते,[२] किन्तु ईदृशेषु बहुषु साक्ष्येष्वैतिहासिकदृष्ट्या महान् सन्देहो जायते। नाममात्रोल्लेखेन, राज्यमात्रकथनेन वा न किमपि प्रतिपादितं भवति, यदि तत्र स्पष्टतया विश्लिष्य किञ्चिन्नोल्लिखितं स्यात्। उत्कलराजं पराजित्य देवपाल ऐतिहासिककर्मणां नूतनं मार्गं प्रविष्टः। एवं च देवपालस्येदृशी गौरवगाथा। अयं मनोभावश्च दाक्षिणात्यशासकानां मनांसि धुनोति स्म। बादलस्तम्भलेखस्य योंऽशोऽस्माभिः पूर्वमेव समुल्लिखितः, स तु महता प्रयत्नेन बहुप्रयासेन च विश्लेषयितव्यः। कस्मिंश्चिद् योद्धृजनयुद्धे कोऽपि द्रविडराजः पराभूत आसीदिति नास्य लेखस्याशयः। यदनेनोद्धृतं तेन ज्ञायते द्रविडराजस्य दर्पो देवपालेन खर्वीकृतः, कलिङ्गराजानामुपरि देवपालस्य प्रभावात्। एवं च जामायां सुमात्रायां च देवपालस्य सम्बन्धनैकट्याद् द्रविडनृपा आत्मनो लघु मेनिरे। यदि तु 'द्रविडनाथ' इति पदस्य 'द्रविडानां नाथः' इति षष्ठीसमासः स्यात्, तर्हि स द्रविडनाथः प्रकृत्या द्रविडो भवितुं नार्हत्यपि, द्रविडाद् भिन्नोऽपरः कोऽपि द्रविडनाथोऽनायासेनैव भवितुं शक्नोति। तथा सतीदमेव द्रविडनाथपदं राष्ट्रकूटान् अवश्यमेव सूचयति, इमे हि राष्ट्रकूटास्तस्मिन् समये द्रविडदेशे आत्मानं प्रतिष्ठापयितुं समुद्युक्ता अभूवन्।

---

१. कृष्णस्वामी आयङ्गारः, कोमेमोरेसन वॉल्युम १९३६, पृ० १९९।
मगधपदेन महीशूरराज्यस्थितं सालेमं तथा अरकोटपदं गृहीतव्यमिति केषाञ्चन मतम्, (के० आर० वेङ्कटरमणः, मडार्णं रिभिउ, अगस्त १९५३, पृ० २५१-२५२)

२. "स्वयमेवोपगतौ च यस्य महतस्तौ धर्मचक्रायुधौ"
(एपिग्राफिया इण्डिका, वॉल्युम १८, पृ० २५३)

# सामर्थ्यार्थकः √क्रृप् (कृपू) : अर्थविज्ञानम्

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

√कृप् ( कृपू ) १/७५४ सामर्थ्ये ( आ )। प्रकृतधातोः संबन्धः कृधातुना सुस्पष्टं ज्ञायते। एतस्य बहुत्र करणरूपोऽर्थोऽपि दृश्यते। √कृ+प्, √कृ+प्, √कृ+ड्, √कृ+त्, √कृ+श् इत्येतादृशेषु धातुषु लभ्यते वर्णोपजनः। चुरादौ पठितौ दौर्बल्याव-कल्कनार्थकौ कृपधातू अस्यैव प्रपञ्चरूपौ।

१. 'कृतिरेषा हि भद्रं ते पारिजातस्य सुप्रभे' इत्यत्र हरिवंशपुराणे ( २, ६५, ३२ ) क्रियासामान्यवाचकस्य कृधातोः सामर्थ्यमर्थो दर्शितपूर्वः। भौवादिकः सामर्थ्यार्थकः कृप् धातुरकर्मकः, कृधातुस्तु सकर्मक इति तयोर्भेदः। स्वार्थणिजर्थकस्तु प्रकाममभिव्यनक्ति कृधातोरर्थम्। ऋग्वेदे ( १०,१८४,१ ) 'विष्णुर्योनिं कल्पयतु' इत्यत्र 'ऋतून् कल्पयाति' ( १०,२,४ ) इत्यत्र च 'करोतु' इति सायणः[१]। 'पुनरेहि वृषाकपे सुविता कल्पयावहै' ( ऋ० १०,५२,४ ) इत्यत्र 'पर्यालोच्य कुर्याव' इत्यर्थः। ऋग्वेदे ( १,१७०,२ ) सकर्मक-तयापि प्रयोगः—'तेभिः कल्पस्व साधुया' = साधुत्वं कल्पयेत्यर्थः[२]। अयं करणार्थो रचनो-त्पादनरूपो वेद्यः। ऋ० ( १०,११४,५ ) 'एकं सन्तं बहुधा कल्पयन्ति' इत्यत्र 'कुर्वन्ति' इत्यर्थे रचनोत्पादनं वा दृश्यते। 'यथापूर्वं प्रजाः कल्पेरन्' ( तै० सं० ७,२,७,१ ) इत्यत्र, 'कल्पता प्रीतिं परां प्रभुः' ( भट्टि० ६,४५ ) इत्यत्र च जननमर्थः। मनुस्मृतौ ( १,८७ ) 'पृथक् कर्माण्यकल्पयत्' इत्यत्र निर्माणरूपोऽर्थः। 'इदं शास्त्रमकल्पयत्' ( मनु० १,१०२ ) इत्यत्र रचनार्थः। ऋग्वेदेऽपि ( ८,५८,१ ) दृश्यते सः 'यमृत्विजो बहुधा कल्पयन्तः' इत्यत्र।

२. क्षौरकर्मादिना वेषादि[३]रचनाप्रसङ्गेऽयं छेदनार्थकोऽपि जातः। अत एवैष छेद-नार्थः केशनखश्मश्रूणां प्रसङ्ग एव दृश्यते। मनु० ( ७,१२५ ) 'क्लृप्तकेशनखश्मश्रुः' इत्यत्र कल्पनम् = छेदनमर्थः। चरकसंहितायाम् ( ५,६६ ) 'केशश्मश्रुनखादीनां कल्पनं संप्रसाधनम्' इत्यत्रापि कर्तनमर्थः कल्पनस्य। मृच्छकटिके ( १७ पृ० ) 'कप्पिज्जन्त < कल्प्यमानम्' इत्यस्य च्छेद्यमानमित्यर्थः। तत्रैव ( २३२ पृ० ) 'केसकप्पणा' इत्यस्य कर्तनादिना रचनार्थः।

---

१. द्रष्ट० नैषध० ( ४,८८; १६,९४; २०,१४७ ) इत्यत्र प्रकाशटीका; मनु० ( ७,१२५ ) इत्यत्र मन्वर्थ०; रघु० १७,९ इत्यत्र च सञ्जीवनी।

२. तुल० महाभारते ( २,२९,७ ) 'क्लृप्तानि' = कृतानि [ नील० ]।

३. कल्पना = हस्तिसज्जना ( अ० को० २,८,४२ )। पञ्च क्लृप्ता महायज्ञाः—मनु० ३,६९ = अनुष्ठेयतया स्मृताः [ मन्वर्थ० ]।

अयं छेदनार्थो हिन्दीभाषायां विच्छिद्यापाकरणरूपेण खुण्टनरूपेण वा प्राप्यते 'कपटना'-धातोः। 'कल्पना' इति धातुस्तु द्वैधीकरणार्थकः सकर्मकः। पश्चान्नापितार्थे जातो रूढः कल्पकशब्दः ( द्रष्ट० शब्दमाला ), कर्तन्यर्थे कल्पनीति शब्दः कोशेषु दृश्यते, न तु संस्कृत-वाङ्मये। प्राकृतभाषायाः पण्ह ( प्रश्नव्याकरणसूत्रे ), विपाकश्रुते ( १,४ ), अपभ्रंश-भाषायाश्च समराइच्चकहा-नामके ग्रन्थे ( ३७१ ) कर्तन्यर्थकः कप्पणीशब्दो लभ्यते रूढः।

३. अपरतश्च क्षौरादिना वेषादिरचनाप्रसङ्गे द्वितीयोऽर्थो हस्तिसज्जनारूपोऽपि। कल्पना = हस्तिसज्जनेति। किन्तु केशनखादीनां प्रसङ्ग एव कल्पनस्य च्छेदार्थ इव नाय-मर्थोऽत्रैव रूढः। रघु० ( ५,२८ ) 'रथं रघुः कल्पितशस्त्रगर्भम्' इत्यत्र केवलं सज्जार्थः। भट्टि० ( १४,८९ ) 'चक्लृपे चाश्वकुञ्जरम्' इत्यत्र 'सज्जीकृतम्' इति जयमङ्गलः। द्राविडादि-प्रदेशेष्वपि रचना = गृहप्राङ्गणादिसज्जनार्थेऽद्यापि कल्पना-शब्दप्रयोगो विधीयते।

४. पाणिनिना दर्शितोऽर्थस्तु सामर्थ्यम्। संपन्नतेत्यनर्थान्तरम्। ऋग्वेदे नोप-लभ्यतेऽस्य धातोरकर्मकप्रयोगः। 'अन्येन मत्प्रमुदः कल्पयस्व' ( ऋ० १०, १०, १२ ); 'यथावशं तन्वं कल्पयस्व' ( ऋ० १०, १५, १४ ) इत्यादौ समर्थयस्वेत्यर्थः। अथर्ववेदे ( ५, १९, १५ ) 'नास्मै समितिः कल्पते' इत्यत्र भौवादिकः प्रयोगः सामर्थ्यार्थकः। मनु० ( ७, १५ ) 'भयाद् भोगाय कल्पन्ते' इत्यस्य 'समर्था भवन्ति' इत्यर्थः 'ब्रह्मभूयाय कल्पते' ( मनु० १, ९८ ) इत्यत्र 'संपद्यते' इत्यर्थः। णिजन्तः प्रयोगस्तु संपादनार्थकः—'केवलेन चरणेन कल्पितम्' ( रघु० १६, ७ )। वस्तुत एष सत्तार्थक एव। अत एव 'सामर्थ्यमिह कल्पते' ( वा० रा० २, ४३, २० ) इत्यत्र तिलकटीकायां 'विद्यते' इत्यर्थः कृतः। भट्टि० ( ८, ६६ ) 'अकल्प्स्यदुद्यतिः सर्वा' इत्यत्र जयमङ्गलायाम् अभविष्यदर्थः।

५. 'षट् त्रिंशांश्च चतुरः कल्पयन्तः' ( ऋ० १०, ११४, ६ ) इत्यत्र सोमप्रसङ्गात् पूरणार्थः। तथा च 'एतांश्चत्वारिंशत्संख्याकान् ग्रहान् कल्पयन्तः = सोमेन पूरयन्तः' इति सायणः। एवमेव 'विद्वान्येभिर्देवाँ ऋतुभिः कल्पयाति' इत्यत्राप्यापूरणमर्थः।

६. एतस्य धातो रचनार्थः क्रियार्थो वा पूर्वं दर्शितः। इदानीं विधिर्विधानं वार्थो दर्श्यते। विधानं नाम व्यवस्थापनम्। मनु० ( १, ११२ ) 'महायज्ञविधानं च श्राद्धकल्पं च शाश्वतम्' इत्यत्र कल्पशब्दस्यार्थो विधिरिति। एवमेव ( द्र० ३, १४७ )। यद्यप्यस्य धातोः करणार्थेनैवास्यार्थस्य गतार्थता, तथापि व्यवस्थापनार्थस्य वैशिष्ट्यादिह पार्थक्येन कृतं व्याख्यानम्। इत एव कारणाद् व्यवस्थाप्रधानं शास्त्रं कल्पशास्त्ररूपेण प्रथितम्। इयमेव व्यवस्था न्याये संवर्ते ब्रह्मणो दिने च दृश्यते। प्राकृतभाषायाम् ( आचा० सू०, अ० १, २ ) अयमर्थः 'कप्पिय' इत्यत्र द्रष्टव्यः।

७. अविधौ विधिना, अव्यवस्थायां व्यवस्थया सादृश्यप्रतीतिर्जायत इत्ययमेव विधि-रूपोऽर्थः पश्चात् सादृश्यार्थजनको जातः। पाणिनिना तदर्थकः प्रत्ययो विहितः 'ईषदसमाप्तौ

कल्पब्देश्यदेशीयरः' ( ५, ३, ६७ ) इति सूत्रेण नायमर्थो लभ्यत ऋग्वेदे। वाल्मीकीय-रामायणे ( २, २, २७ ) 'देवकल्पस्य' इत्यत्र देवसदृशस्येत्यर्थः। ( रघु० ५, ४१ ) 'ग्रभूवु-रुद्यानविहारकल्पाः' इतीह कल्पाः = सदृशा इति मल्लिनाथः। प्राकृतभाषायां 'केवलकप्पं' इत्यत्रापि सदृशम् इत्यर्थः ( आवम; पण्ह २, २ )। नूनमयमर्थः परतो विकासं प्राप्तः।

८. प्रवर्तनरूपोऽर्थो वाल्मीकीयरामायणे ( २, ६७, २७ ), महाभारतादौ ( १२, ३२८, ८ ) च लभ्यते—

नाराजके जनपदे माल्यमोदकदक्षिणाः।
देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः॥ (वा० रा०)

यद्यपीह नानार्थाः कल्पयितुं शक्यन्ये दानादयः, तथापि तत्रैव चतुर्विंशे श्लोके वाल्मीकिनैवार्थो निर्णीतः—'नाराजके जनपदे योगक्षेमः प्रवर्तते' इति श्लोकयता। महाभारते ( १२, ३२८, ८ )—

अवतीर्य महीं तेऽथ चातुर्होत्रमकल्पयन्।
संयोजयन्तो विप्रांश्च राजन्यांश्च विशस्तथा॥

इत्यत्रापि चातुर्होत्रप्रवर्तनरूपोऽर्थः सुस्पष्टः।

९. पालनार्थकोऽयं वाल्मीकीयरामायणे ( २, ९१, ६५ ) एव लभ्यते—

कुञ्जराश्च खरोष्ट्राश्च गोश्वाश्च मृगपक्षिणः।
बभूवुः सुभृतास्तत्र नातो ह्यन्यमकल्पयत्॥

अकल्पयत् = अभुञ्जन् ( तिलकः )।

१०. वा० रा० ( २, ५२, ६३ ) 'एष मे प्रथमः कल्पो यदम्बा मे यवीयसी' इत्यत्र रामचन्द्रोक्तौ प्रयोजनरूपोऽर्थो निर्विवादं ज्ञायते ( तुल० महाभारते २, ४०, ३७ प्रयोगार्थे कल्पशब्दः )।

११. महाभारते ( ५, ३६, ५७ )—

न वै तेषां स्वदते पथ्यमुक्तं
योगक्षेमं कल्पते नैव तेषाम्।

इत्यत्रौचित्यार्थकोऽयं धातुः। 'कल्पते = युज्यते' इति नीलकण्ठः। अयमर्थः प्राकृतभाषाया गच्छाचारपयन्नो ( १ ) इति ग्रन्थे, व्यवहारसूत्रे ( ८ ) च लभ्यते 'कप्पियं' इत्यत्र। पंचासकप्रकरणे ( १८, ३० ) कप्पशब्दोऽप्युचितार्थकः।

१२. षष्ठे प्रकोष्ठेऽस्माभिर्व्यवस्थार्थो दर्शितः। व्यवस्थार्थकोऽयं धातुः परतो निश्चयार्थको जातः। महाभारते ( ५, ३३, ५ ) 'अहं हि विदुरस्यास्य नाकल्पो जातु दर्शने' इत्यत्र कल्पशब्दोऽसंशयार्थकः।

१३. रघु० ( १०, ४५ ) 'अचिराद् यज्वभिर्भागं कल्पितं विधिवत् पुनः' इत्यत्र 'उपहृतम्' इत्यर्थो यज्ञप्रसङ्गाद् विज्ञेयः।

१४. रघु० ( १२, ४ )—

तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया।
दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः॥

इत्यत्र कल्पितम् = संभृतम् इत्यर्थः संभारशब्दसाहचर्यात्।

१५. मनु० ( ७, १२८ ) 'तथावेक्ष्य नृपो राष्ट्रं कल्पयेत् सततं करान्' इत्यत्र ग्रहणम् = स्वीकरणमर्थः। नैषध० ( २१, १० ) 'कल्प्यमानममुनाऽऽचमनार्थं गाङ्गमम्बु चुलुकं दरचुम्बि' इत्यत्रापि ग्रहणम् = स्वीकरणमर्थः।

प्राकृतभाषायां केचन नवीना अर्था उपलभ्यन्ते संस्कृतवाङ्मये दुर्लभाः—

१६. कप्प = अधिवासः ( बृह १ )

१७. कप्प = प्रक्षालनम् ( पिंड २६६; २७१; ३०५; गच्छ २,३२ )।

१८. कप्प = आचारः, व्यवहारः ( वव १; पव ६६ )।

इह प्रसङ्गतो भौवादिकस्य √कृप् < √क्रप् धातोः, चौरादिकयोश्च चिन्तन-दौर्बल्यार्थकयोर्धात्वोरर्था अपि परीक्ष्यन्ते। एतेषां त्रयाणां धातूनां विभागः कारणवशात् कृतः। घटादौ कृपा-गत्यर्थकस्य पाठः षित्वार्थमिति 'षिद्भिदादिभ्योऽङ्' ( ३, ३, १०४ ) इति कृपाशब्दनिष्पत्तिः। अर्थोऽपि कृप् ( कृपू ) धातुवद् दृश्यते। ऋ० ( १, ११३, १० ) 'अनु पूर्वाः कृपते वावशाना' इत्यत्र 'अनुकृपते = अनुकल्पते = समर्था भवति' इत्यर्थः। 'वेनानामकृपन्त पूर्वीः' ( ऋ० ९, ८५, ११ ) इत्यत्र 'उपकल्पन्ते' इत्यर्थः। एवं प्रकारेणेह कृपार्थको गत्यर्थको वा धातुः सामर्थ्यार्थे लभ्यते। अवकल्कनार्थकस्य चिन्तनार्थकस्य वा चौरादिकस्य कृपधातो रूपाणि लकारविशिष्टान्येवेति तेषां सन्निवेशः पूर्वमेव कृतः, अर्थभेदश्च वर्णितः। दौर्बल्यार्थकश्चौरादिकः कृपधातुरदन्त इति तत्र 'कृपो रो लः' ( ८, २, १८ ) इति सूत्रं न प्रवर्तते। अतस्तस्य लत्वहीनानि कृपयतीत्यादीनि रूपाणि भवन्ति। तेषामर्थः सामर्थ्यमपि भवति। अथेदानीं कृपा( क्रपा )नुपूर्वीकस्य धातोरर्था लिख्यन्ते—

'क्रक्षमाणमक्रपेताम्' ( ऋ० ८, ७६, ११ ) = अनुकल्पयेताम् इति सायणः। 'गिरो वेनानामकृपन्त पूर्वीः' ( ऋ० ९, ८५, ११ ) = उपकल्पन्ते ( सा० )। 'उतो कृपन्त धीतयः' ( ऋ० ६, ६६, ४ ) = कल्पयन्ति = समर्था भवन्ति ( सा० )। 'मर्तानां चिदुर्वशीरकृप्रन्' ( ऋ० ४, २, १८ ) = ताभिरानीताभिर्गोभिः क्लृप्ताः समर्था अभवन् (सा०)। 'अया कृपा न जीर्यति' ( ऋ० १, १२८, २ ) = अनया सामर्थ्यलक्षणया कल्पनया (सा०)। 'देवो देववाच्या कृपा' ( ऋ० १, १२७, १ ) = कृपया सामर्थ्यलक्षणया ( सा० )। 'यं कृपा सूदयन्त इत्' ( ऋ० ८, २३, ८ ) = स्वसामर्थ्येन ( सा० )। एतेषु सर्वेषूदाहरणेषु सामर्थ्यार्थो लक्ष्यते। चतुर्थेऽनुच्छेदे प्रतिपादितोऽयमर्थः।

१६. 'विश्वे देवा अकृपन्त' (ऋ० १०, २४, ५) = युवामस्तुवन् (सा०)। 'जानन्तो रूपमकृपन्त विप्राः' (ऋ० १०, १२३, ४) = स्तुवन्ति (सा०)। 'गिरो वेनानामकृपन्त पूर्वीः' (ऋ० ६, ८५, ११) इत्यत्रापि 'गिरः' इति प्रसङ्गाद् अभिष्टुवन्तीत्यर्थः। 'त्वं कृपा पावक रोचसे' (ऋ० ६, २, ६) = अभिमुखीकरणसमर्थया स्तुत्या (सा०)। 'कृपमाणमकृणुतं विचक्षे' (ऋ० १, ११६, ४) = स्तुवन्तम् (सा०)। 'अगच्छतं कृपमाणम्' (ऋ० १, ११९, ८) = स्तुवन्तम् (सा०)। एतेषु सर्वेषूदाहरणेषु स्तुतिरूपोऽर्थो लभ्यते। 'कृपणे परादात्' (ऋ० १०, ९९, ९) कृपणे = स्तोत्रे (सा०)।

'ज्योतिश्चकृपन्त धीभिः' (ऋ० ४, १, १४) इत्यत्र 'यज्ञमकुर्वन्' इति सायणः। यद्यपि सोऽत्र सामर्थ्यार्थकस्य कृपूधातो रूपमूरीकरोति, तथापि घटादिपठितस्य धातोर्ध्वनिरिह स्वीकर्तुमुचितः। 'कृपयतो नूनमत्यथ' (ऋ० ८, ४६, १६) इत्यत्र करोतेरर्थः। 'युद्धं कल्पयतः शत्रोः' इति सायणः। 'कृपनीलम्' (ऋ० १०, २०, ३) इत्यत्र कृपशब्दस्य कर्मार्थः।

२०. 'बृहस्पतिनाकृपयद्वलो गाः' (ऋ० १०, ६८, १०) इत्यत्र 'प्रायच्छत्' इति सायणः। 'सर्वताता ये कृपणन्त रत्नम्' (ऋ० १०, ७४, ३) = 'प्रयच्छन्ति याचन्ते वा' इति सायणः।

२१. दीप्त्यर्थकोऽप्ययम्। ऋग्वेदे (६, १५, ५) 'पावकया यश्चितयन्त्या कृपा' इत्यत्र कृपाशब्दस्तृतीयान्तो दीप्त्यर्थकः। 'कृपा तन्वा रोचमानः' (ऋ० ७, ३, ६) = दीप्त्या (सा०)। 'स्तवानो देव्या कृपा' (ऋ० ८, २३, ५) इत्यत्र देव्या = द्योतमानया कृपा = ज्वालयेत्यर्थः।

२२. दैन्ये कार्पण्ये वा वृत्तिः—'कृपणम्' (पैसं० १६, ४१, ५)। तुल० पीटर्सवर्गसंस्कृतकोशप्रभृ०। वा० रा० (२, १२, ७२) 'कृपणं बत वैदेही' इत्यत्र कृपणशब्दस्य 'कष्टम्' इत्यर्थः। तत्रैव (२, ३२, २८) 'द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्यो ह्यदापयत्' इत्यत्र 'दीनेभ्यः' इत्याकूतम्। प्राकृतभाषायां खिप्पधातुर्दौर्बल्यार्थकः—खिप्पइ (संक्षि, ३५)।

२३. दैन्यं दृष्ट्वा दयोद्भव इति दयार्थकोऽयं जातः। कृपाशब्दो दयानुकम्पार्थकः प्रसिद्धः। घटादयः षितः। षित्त्वात् 'षिद्भिदादिभ्योऽङ्' (३, ३, १०४)। कृपाणशब्दे कृपेति दयार्थकः। क्षीरस्वामी त्वेतस्य व्युत्पत्तिप्रसङ्ग आहामरकोशोद्घाटने—कल्पत इति कृपाणः। सुधायां भानुजिदीक्षितस्तु—'कृपां नुदति' इत्याह। वस्तुतस्तु कृपायाम् अणकः = कुत्सितः (तु० 'पापाणके कुत्सितैः'—पा० २, १, ५४) इति कृपाणः, कृपाणकः। ऋग्वेदे (१०, २२, १०) 'कार्पाणे शूर वज्रिवः' इत्यत्र कृपाणेन साध्ये युद्धे कार्पाणशब्दप्रयोगः।

२४. दैन्याक्रान्ते याचनाभावना। कृपणशब्दस्य नामधातोर्याचनार्थः—'तत्तदग्निर्वयो दधे यथा यथा कृपण्यति' ( ऋ० ८, ३९, ४ ) = स्तोतृभिर्याच्यत इति सायणः। तुल० 'सर्वताता ये कृपणन्त रत्नम्' ( ऋ० १०, ७४, ३ )।

२५. तृतीयान्तस्य 'कृपा' इति धारार्थकस्याद्वितीयमुदाहरणम् ऋग्वेदे ( ६, १४, २८ ) 'दविद्युतत्या रुचा परिष्टोभन्त्या कृपा। सोमाः शुक्रा गवाशिरः' इति। अस्मिन्नर्थे वैमत्यं दृश्यते व्याख्यातॄणाम्। सायणेन तु धारार्थः कृतः, न तु दीप्त्यर्थः। 'दविद्युतत्या रुचा' इत्यनेन द्योतमानदीप्त्यर्थस्य प्रतिपादनात्, सोमानां प्रसङ्गाच्च 'कृपा' इत्यस्य धारयेत्यर्थः समीचीनः। सा च धाराऽऽकारोऽपि।

एवं तावत् पञ्चविंशतिरर्था अस्य धातोः। ते चेमे—१. करणम् (रचना, उत्पादनम्), २. छेदनम्, ३. सज्जा, ४. सामर्थ्यम्, ५. पूरणम्, ६. विधिः, ७. सादृश्यम्, ८. प्रवर्तनम्, ९, पालनम्, १०. प्रयोजनम्, ११. औचित्यम्, १२. निश्चयः, १३. उपहारः, १४. संभारः, १५. ग्रहणम् ( स्वीकरणम् ), १६. अधिवासः, १७. प्रक्षालनम्, १८. आचारः ( व्यवहारः ), १९. स्तवः, २०. दानम्, २१. दीप्तिः, २२. दैन्यम् ( कार्पण्यम् ), २३. दया, २४. याचना, २५. धारा चेति।

जूलियसपॉकर्नीमहोदयेन *स्कॅल् ( एँ ) प्—इति भारोपीयधातुर्दर्शितः। लातिन-भाषायामेतस्यार्थद्वयी—'स्कल्पो' = लालसा गात्रविघर्षणं चेति। लिथुआनियनभाषायां दीप्त्यर्थकः—'स्कलेम्प्ति' = दीप्तिः ( घर्षणोज्ज्वलनम् )। अवेस्ताभाषायां क्लृप्त्यर्थकः—'हु-कॅरॅप्त' ( hu-kerepta ) < सुक्लृप्तम्। तत्रान्योऽप्यर्थो लभ्यते 'आकारः' इति—हु-कृफ़स् ( यस्न ९, १६ ) < सुकृप् = शोभनाकारः ( पुरुषः )। अयं शब्द ऋग्वेदीयेन दीप्त्यर्थकेन कृप्-शब्देन तुलनीयः।



# वैदिकदर्शनेषु ज्ञानस्य मोक्षकारणत्वविमर्शः

डॉ० स्वामी आत्मानन्दपरमहंसः
बी० १।३५ पाठकनिवासः, अस्सी, वाराणसी–५

## ज्ञानस्य मोक्षकारणत्वविमर्शः

[1]"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय', [2]"ज्ञानादेव तु कैवल्यम्' इत्यादिश्रुतिषु ज्ञानस्यैव मोक्षकारणत्वमवसीयते। [3]"विद्यां चाविद्यां च' इत्यादिश्रुतौ च कर्मसहकृतस्य तस्य तन्निश्चीयते। एतदवलोक्य मीमांसकभट्टभास्करादयो ज्ञानकर्मणोस्तुल्य-कक्षतयैव समुच्चयं श्रीभाष्यकारप्रभृतिवैष्णवाचार्यास्तु कर्माङ्गज्ञानवादं व्यवस्थापयन्ति। मत-द्वयेऽपि ज्ञानं चोपासनं चेत्यनर्थान्तरम्। नैयायिकवैशेषिकौ, सांख्ययोगौ औपनिषदाश्च कर्मणां चित्तशुद्धिमात्रेणोपक्षयाज्जन्मान्तरीयेणापि तत्सम्भवः, इह च तदनिवार्यत्वाभावान्न कर्म ज्ञानाङ्गम्, न वोपासनाङ्गम्, किन्तु ज्ञानमात्रमेव मोक्षसाधनम्।

अत्र समुच्चयवादिनामयमाशयः—तीर्थविशेषस्नानयज्ञयमनियमादिकर्मणां निःश्रेयस-साधनत्वं शब्दबलादवगम्यते। उक्तञ्च—

[4]"अपाम सोमममृता अभूम', [5]"अक्षय्यं वै चातुर्मास्ययाजिनस्सुकृतं भवति' इति।

तत्र निःश्रेयसे जनयितव्ये कर्मणस्तत्त्वज्ञानव्यापारकत्वं न तावच्छब्दाल्लभ्यते, तत्र तस्यौदासीन्यात्। न च कर्मणामाशुतरविनाशित्वेन व्यापारः कश्चिदवश्यं स्वीकर्त्तव्यः, तत्र दृष्टेन तत्त्वज्ञानेनैवोपपत्तावदृष्टकल्पनाया अयुक्तत्वात् तत्त्वज्ञानकल्पनमेव युक्तमिति वाच्यम्; तत्त्वज्ञानस्यापि व्यवहितत्वेन तदर्थमपि कर्मकारणतानिर्वाहायापूर्वरूपव्यापारवत्त्व-स्यावश्यं कल्पनीयत्वात्। तथा च निःश्रेयसे जनयितव्येऽपूर्वमेवास्तां कर्मव्यापारः, आवश्यक-त्वात्। उत्पन्नेऽपि तत्त्वज्ञाने निःश्रेयसोत्पत्तये नित्यकर्मयमनियमादिकमवश्यमनुष्ठेयम्। तदानीमपि मोक्षार्थिनो नित्यकर्मसन्ध्यादौ यमनियमादौ चाधिकारानपायात्। न च तत्त्व-ज्ञानोत्पत्तौ सत्यां निःश्रेयसोत्पत्तिसिद्धौ कर्मानुष्ठानानवकाश इति वाच्यम्; [6]"क्रियावानेष

---

१ श्वेताश्वतरोपनिषत् ३।८।

२. सर्ववेदान्तसिद्धान्तसारसंग्रहे 'ज्ञानादेव तु कैवल्यमिति श्रुत्या निगद्यते' इत्यादिना १७० तमे श्लोके श्रुतित्वेनास्य वचनस्योद्धरणदर्शनादियं श्रुतिरिति।

३. ईशावास्योपनिषत्, मं० ११।

४. ऋग्वेदे मण्ड० २, सू० ८, मं० ४८।

५. आपस्त० श्रौतसूत्रे अष्टमे प्रश्ने प्रथमपटले खं० १, सू० १, पृ० ३१९।

६. न्यायतदूषणीग्रन्थे ६४ पृष्ठ उद्धृतम्।

ब्रह्मविदां वरिष्ठः', [१]'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादौ ज्ञानिनामपि कर्म-श्रवणात्। न चैवं कर्मण एव मोक्षसाधनत्वे सिद्धे किं ज्ञानकर्मसमुच्चयेनेति वाच्यम्;

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायां रताः॥[२]

इत्यादिश्रुतौ 'ये कर्मण्येवासक्ता भवन्ति ते अन्धं तमः प्रविशन्ति, अर्थात् संसारान्नाति-वर्त्तन्ते' इत्यर्थिकायां केवलकर्मणामाश्रयणेन, केवलज्ञानमात्राश्रयणेन वा न मोक्ष इति प्रतिपादनादविद्यापदस्य कर्मपरत्वात्, यथाश्रुतमिथ्याज्ञानार्थकत्वे 'विद्यां चाविद्यां' चेत्याद्यग्रिमश्रुतेरसङ्गत्यापत्तेः। अत एव हि श्रुतिषु समुच्चयः श्रूयते—

विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥[३] इति।

न च नित्यकर्मणस्संन्यास उचितः, तदकरणेन प्रत्यवायस्यातिबहुतरत्वात्।

ननु [४]'तमेव विदित्वातिमृत्युमेति' इत्यादिपूर्वोदाहृतश्रुत्या कर्मरूपस्य पथः साक्षा-न्निषेधात् तद्विरोधापत्तिरिति चेन्न, तस्याः 'तं विदित्वैव मृत्युमत्येति अन्यः केवलकर्मरूपः पन्था अयनाय न विद्यते' इत्यर्थपरत्वात्। अथैवमपि कर्मसमुच्चयो नोपपद्यते, काम्यनिषिद्ध-योस्तु ( मुमुक्षुणा ) पूर्वमेव त्यक्तत्वेन ताभ्यां सह समुच्चयासम्भवात्। पूर्वाश्रमीयनित्यकर्मा-भावेऽप्युत्तरोत्तराश्रमविहितनित्यकर्मरतानां तत्त्वज्ञानसमुत्पत्त्तावतिमुक्तिश्रवणेन नित्यकर्मणा-मेकैकशो ज्ञानव्यभिचारित्वावगमात्, सर्वेषां नित्यकर्मणां साकल्यासम्भवेन सकलनित्यकर्मभिः सह ज्ञानसमुच्चयस्यासम्भवादिति चेन्न, तत्तदाश्रमोचितनित्यकर्मभिर्निःश्रेयसहेतुतया प्रति-पादितैर्यमादिभिश्च सह समुच्चयसम्भवात्। [५]'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इति श्रीमद्भगवद्गीतावचनादिति। इदं सर्वमभिप्रेत्योक्तम्—

ननु निःश्रेयसं ज्ञानाद् बन्धहेतोर्न कर्मणः।
नैकस्मादपि तत् किन्तु ज्ञानकर्मसमुच्चयात्॥
नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत्॥
वैराग्यात् पक्वविज्ञानः कैवल्यं लभते नरः।
न च ज्ञानविधानेन कर्मसम्बन्धवारणम्॥[६] इति।

---

१. श्रीमद्भगवद्गीता ३।२०।
२ ईशावास्योपनिषद्, मं० ९।
३. ,, ,, ११।
४. श्वेताश्वतरोपनिषद् ६।१५,३।८।
५. श्रीमद्भगवद्गीता १८।४५।
६. प्रकरणपञ्चिकायाम् ३५२ पृष्ठे बृहट्टीकावचनत्वेनोद्धृतानि वचनानि।

किन्तु नायं पक्षः समीचीनः प्रतिभाति, शब्दबलात्तत्तत्कर्मविशेषस्यापवर्गकारणत्वाव-गमेऽपि न कर्मणस्तत्त्वज्ञाननिरपेक्षस्य मिथ्याज्ञानोन्मूलनव्यतिरेकेणापवर्गकारणत्वं सम्भवति, संसाराविच्छेदात्, तदुन्मूलनस्य तत्त्वज्ञानसाध्यत्वेन लोकत एवावधारणात्, कर्मसहस्रेणापि शुक्तितत्त्वज्ञाननिरपेक्षेण रजतभ्रमनिवृत्तेरदर्शनात्, [1]'नान्यः पन्था विद्यतेऽयनाय', [2]'न कर्मणा न प्रजया धनेन', [3]'ज्ञानादेव तु कैवल्यम्' इत्यादिश्रुतौ ज्ञानमात्रस्यैवापवर्गकारणत्व-श्रवणाच्च । तथा च तत्त्वज्ञानस्यैव मोक्षकारणत्वमिति वेदितव्यम् । समुच्चयश्रुत्या 'विद्यां चाविद्यां च' इत्यादिकया कर्मण्यपवर्गकारणतामात्रं साक्षात् परम्परासाधारणं बोध्यते । तस्याश्च द्वारद्वारिभावेऽप्युपपन्नत्वेन न तया समुच्चये साक्षात् कारणत्वसिद्धिरिति ।

न च श्रुतेर्द्वारद्वारिभावापन्नसमुच्चयपरत्वे [4]'ततो भूय इव ते तमः' इत्यादिना तत्त्व-ज्ञानिनो नित्याऽकरणे प्रत्यवायाभिधानं विरुद्धयेतेति वाच्यम्, परोक्षविद्यावतः श्रुत्या प्रत्यवा-याभिधानात्, तस्य चाकरणे तदौचित्यात् । न चैवं सति योगिनः कर्मानुष्ठानानुपपत्तिः, इष्टापत्तौ चान्तःकरणशुद्ध्यर्थं करणीयकर्मबोधकस्य [5]'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्म-शुद्धये' इति श्रीमद्भगवद्गीतावचनस्य विरोधः प्रसज्ज्येतेति वाच्यम्; [6]रागापगमेनाकरण-प्रत्यवायासम्भवे दोषाभावात् । न च लोकसङ्ग्रहायानुष्ठानमस्त्विति वाच्यम्; लोकानां कर्मानुष्ठानस्य योगीष्टासाधनत्वेन तावताप्यनिस्तारात् । न च परमकारुणिकत्वेन तदुपपत्ति-रिति साम्प्रतम्, तावतापीष्टसाधनताज्ञानाभावे स्वतन्त्रप्रवृत्त्यनुपपत्तेः, निर्ममत्वेन लोक-हिताहितयोरौदासीन्याच्च । न चौदासीन्येऽपि [7]'जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन्' इति विधिबलादेव प्रवृत्त्युपपत्तिरिति वाच्यम् ; अस्य वचनस्य परोक्षविद्यावद्विषयत्वेनाप्यु-पपत्तिसम्भवात् । 'कर्मक्लेशप्रदादृष्टप्रतिक्षेपाय केवलं तत्त्वविज्ञानसम्पन्ना योगिनः कर्म कुर्वन्ति' इत्यर्थस्वीकारे सर्वविधसङ्गत्युपपत्तेः ।

अथ ज्ञानकर्मणोर्द्वारद्वारिभावकथनेऽपि तत्त्वज्ञानस्य कर्मव्यापारत्वमित्युक्तं भवति । तदयुक्तम्, [8]'न कर्मणा न प्रजया धनेन', 'नान्यः पन्था विद्यते', [9]'नास्त्यकृतः कृतेन', [10]'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥'

---

१. श्वेताश्वत० ३।८ ।
२. महानारायणोपनिषत् ८।१४; तैत्तिरी० ४।१२।३ ।
३. सर्ववेदान्तसिद्धान्तसारसंग्रहे १७० श्लोके श्रुतिवचनत्वेनोद्धृतः ।
४. ईशावा० मं० ९ ।
५. श्रीमद्भगवद्गीता ५।११ ।
६. 'नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन' इति श्रीमद्भगवद्गीतावचनादिति ।
७. श्रीमद्भगवद्गीता ३।२६ ।
८. तैत्तिरीयोपनिषद् ४।१२।३; महानारायणोप० ८।१४ ।
९. मुण्डकोप० १।२।१२ ।
१०. श्रीमद्भगवद्गीतायाः ३।१ श्लोकशाङ्करभाष्ये शुकानुशासनत्वेनोदाहृतश्लोकः ।

इत्यादिश्रुतिस्मृतिशतेन निषेधाद् मोक्षस्य कर्मजन्यत्वाभावात्। [1]'तपसा कल्मषं हन्ति', [2]'अविद्यया मृत्युं तीर्त्वा तं पश्यति निष्कलं ध्यायमानः', 'कषायपङ्क्तिः कर्माणि' इत्यादिभिस्तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवृत्त्यैव कर्मणामन्यथासिद्धेः स्फुटरूपेण प्रदर्शनात्। न च [3]'विविदिषन्ति यज्ञेन', [4]'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यादिभिः कर्मजन्यतापि प्रतीयत इति वाच्यम्; कर्मजन्यताया अपूर्वद्वारैव स्थापनीयत्वेनात्र तदसम्भवात्, प्रतिबन्धकदुरितानुच्छेदेऽपूर्वसहस्रस्याप्यकिञ्चित्करत्वात्। तमुच्छिद्य जनने तु प्रमाणावधृतकारणत्वाभावेन प्रतिबन्धकाभावविधयैवान्यथासिद्धिप्रसङ्गात्। न चैवं सति यागादेरप्यपूर्वेणैवान्यथासिद्धिप्रसङ्ग इति वाच्यम्; तत्रापूर्वस्य यागकारणताग्रहोत्तरकल्प्यत्वेनोपजीव्यापरिपन्थित्वात्, अत्र च प्रतिबन्धकाभावे कार्यमात्रकारणतायाः प्रागेवावधृतत्वेन महद्वैषम्यात्। किञ्च, कर्मकारणताग्रहमनुपजीव्यैव सार्वलौकिकानुभवबलेन तत्त्वज्ञाने मिथ्याज्ञाननिवर्त्तकत्वस्य सिद्धत्वेन [5]'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः', 'तमेव विदित्वातिमृत्युमेति', [6]'तरति शोकमात्मविद्', [7]'ब्रह्मविदाप्नोति परम्', [8]'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिशतेन प्रमाणितत्वाच्च कर्मणामन्यथासिद्धत्वमेव। एवञ्च न तत्त्वज्ञाने द्वारतासम्भवः। एवमेव हि मीमांसका अध्ययनविधेरर्थाववोधपर्यन्तत्वमेवाभ्युपगच्छन्ति, तद्द्वारा क्रत्वनुष्ठानं प्रति स्वर्गादिफलं प्रति च कारणत्वास्वीकारात्। न च तत्त्वज्ञानस्य कर्माजन्यत्वे तेनैव ( तत्त्वज्ञानेनैव ) व्यवधानात् कर्मणो निःश्रेयसहेतुत्वानुपपत्तौ [9]'तपो विद्या च विप्रस्य निःश्रेयसकरं परम्' इत्यादिस्मृतिव्याकोप इति वाच्यम्; तदर्थस्य तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवर्त्तकत्वरूपस्य 'तपसा कल्मषं हन्ति' इत्याद्युत्तरार्द्धेन स्फुटं विवृतत्वादिति चेत्, सत्यम्; कर्मणां निःश्रेयसानुकूलत्वमात्रं हि श्रुतेरर्थः। अनुकूलत्वमत्र निःश्रेयसप्रागभावव्याप्यप्रागभावप्रतियोगित्वमात्रम्। न त्वनन्यथासिद्धेरपि तत्र प्रवेशः, 'न कर्मणा न प्रजया धनेन', [10]'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिबहुतरश्रुतिभिरन्यथासिद्धेः, स्फुटमुत्कीर्त्तनात्। तावतैव च ( अनुकूलत्वबोधकतयैव च ) श्रुतेः कर्मप्रवृत्तिपरतानिर्वाहात्। अत एव कर्मस्वपवर्गकारणताबोधकश्रुतिस्मृतिजातस्यैव निःश्रेयसप्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपानुकूलत्वमात्रपरत्वमेवेत्यवधारणीयमिति।

---

१. मनुस्मृतिः १२।१०४।
२. मैत्रायण्युप० ७।९।
३. बृहदारण्यकोप० ४।४।२२।
४. श्रीमद्भगवद्गीता ४।३३।
५. मुण्डकोप० २।२।५।
६. छान्दोग्योपनिषत् ७।१।३।
७. तैत्तिरीयोपनिषत् २।१।
८. मुण्डकोपनिषत् ३।२।९।
९. मनुस्मृतिः १२।१०४।
१०. छान्दोग्योपनिषत् ८।१।६।

यत्तु—[1]"नियतं कुरु कर्म त्वम्', [2]"मामनुस्मर युध्य च' [3]"कर्मण्येवाधिकारस्ते' इत्यादिश्रीमद्भगवद्गीतावचनाज्ज्ञानेन मोक्षे जननीयेऽग्निहोत्रादिश्रौतस्मार्तकर्मणां समुच्चयोऽवगम्यते। न च समुच्चयाभ्युपगमे [4]"एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति ज्ञानकर्मनिष्ठयोः पृथक्कृत्योपदेशानुपपत्तिरिति वाच्यम्, द्वयोरपि बुद्ध्योरेकपुरुषविषयत्वोक्त्या कदा कस्या अनुष्ठानमिति विवेकानवधारणेन ज्ञानकर्मसमुच्चयवादेऽपि तादृशप्रश्नस्योपपत्तौ बाधकाभावात्; [5]"धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते' इत्यादिना क्वचित् कर्मप्राधान्यस्यावगतौ [6]"श्रेयान् द्रव्यमयाद् यज्ञाज्ज्ञानयज्ञः परन्तप', [7]"सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि' इत्यादिना क्वचिच्च ज्ञानप्राधान्यस्यावगतौ प्रकारभेदमाश्रित्य समाधानसम्भवात्। [8]"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इत्यत्रापि [9]"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' इत्यादिवचनैकवाक्यतया कर्मापरित्यागेनैव ज्ञानविधिः प्रतीयते। एवञ्च ज्ञानकर्मसमुच्चय एव श्रीमद्भगवद्गीतायास्तात्पर्यमवबुद्ध्यत इति मतम्, तदापातरमणीयम्; अविद्वांसमर्जुनं व्याजीकृत्य कर्मयोगस्योपदिष्टत्वात्, विदुषि तदसम्भवात्;

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।[10]

इत्यविदुषः पृथक्कृत्य विदुषः कर्मनिषेधात्।

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्॥[11]

इति स्पष्टरूपेण पृथग्वचनाच्च, अन्यथा 'द्विविधा' इत्यत्र 'विधा'-पदार्थानुपपत्तिः स्यात्।

ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन।
तत्किं कर्मणि घोरे मां नियोजयसि केशव॥[12]

---

१. श्रीमद्भगवद्गीता ३।८।
२. ,, ,, ८।७।
३. ,, ,, २।४७।
४ ,, ,, २।३९।
५. ,, ,, २।३१।
६. ,, ,, ४।३३।
७. ,, ,, ४।३६।
८. ,, ,, १८।६६।
९. ,, ,, ९।३४, १८।६५।
१०. ,, ,, ३।१७-१८।
११. ,, ,, ३।३।
१२. ,, ,, ३।१।

इत्यर्जुनप्रश्नस्यापि ज्ञानकर्मसमुच्चयपक्षेऽनुपपद्यमानत्वाच्च। ज्ञानैकसाधनतावाद एव 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति सर्वकर्मत्यागोपदेश उपपद्यते। 'मन्मना भव' इत्यादिवचनन्तु बाह्यकर्मत्यागं ज्ञापयज्ज्ञानस्य कर्मसमुच्चयं वारयति। न ह्यर्जुनमेकं प्रत्येव श्रीमद्भगवद्गीतोपदेशः [1]'ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप' इति सर्वान् प्रत्येव तं व्याजीकृत्य गीतोपदेशस्य प्रवृत्तत्वेन नोभयोरेकपुरुषाश्रयतानियमो व्यवस्थापयितुं शक्यः, येन कर्मयोगज्ञानयोगयोः प्रकारभेदमात्रमुपदिष्टं स्यात्। अत एव—'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।' 'बहिःसूत्रं त्यजेद् विद्वान् योगमुत्तममाश्रितः।'[2] इत्यादिवचनस्यापि संगतिः, ज्ञानकर्मसमुचयवादे कर्माङ्गयज्ञोपवीतत्यागादिविधेरनुपपत्तेः।

ननु

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥[3]

इति मनुवचनात् कर्मणामावश्यकत्वमिति वाच्यम्; एतद्वचनस्याविरक्तविषयत्वात्; अन्यथा [4]'तस्याश्रमविकल्पमेके ब्रुवते' यमिच्छेत्तमावसेदिति समाप्तब्रह्मचर्याश्रमस्य विकल्पप्रतिपादक-गौतमस्मृतिविरोधः [5]'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वा' इति श्रुत्युपरोधश्च स्यात्। किञ्च,

बहिःसूत्रं त्यजेद् विद्वान् योगमुत्तममाश्रितः।[6]
शिखा ज्ञानमयी यस्य उपवीतञ्च तन्मयम्।
स शिखीत्युच्यते विद्वान् नेतरे केशधारिणः॥[7]

इति शिखायज्ञोपवीतत्यागपुरस्सरसर्वकर्मसंन्यासस्य ज्ञानसाधनत्वेन विधानादपि न तयोः साक्षात्समुच्चयः। तस्माज्ज्ञानकर्मणोः फलेऽसमुच्चयाद् हेतुहेतुमद्भावेन क्रमात् समुच्चय आश्रयितव्यः [8]'तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इतीष्यमाणफलभूतज्ञाने वेदानुवचनादीनां विनियोगप्रतिपादनात्। अत एव सुष्ठूक्तं श्रीजयन्तभट्टैः—

---

१. श्रीमद्भागवद्गीता १८।४१।
२. जीवन्मुक्तिविवेके १५३ पृ० उद्धृतः।
३ मनुस्मृतिः ६।३७।
४. गौतमधर्मसूत्रे प्र० १, अध्या० ३, सू० १, पृ० २१।
५. जाबालोपनिषत् ४।
६. जीवन्मुक्तौ १५३ पृष्ठे।
७. जीवन्मुक्तौ १५३ पृष्ठे। गौतमधर्मसूत्रेऽपि १।३।२१ सूत्रे, २५ पृ० आनुपूर्वीभेदेन।
८. बृहदारण्यकोपनिषद् ४।४।२२।

[1]"ननु नित्यकर्मानुष्ठाने प्रत्यवेयादिति तद्द्वारकबन्धपरिहारोपायत्वात् कर्मापि मोक्षाङ्गं स्यात्, न; संन्यासविधानस्य प्रत्यक्षोपदेशादित्युक्तत्वात्' इति [2]"अध्यात्मविदश्च ज्ञानकाण्डौपयिकमेव क्रियाकाण्डमन्यत्, साक्षात्तु कर्मसाध्येऽपवर्गे स्वर्गवदपायित्वप्रसङ्गात् कृतकस्य ( भावरूपस्य ) सर्वस्यानित्यत्वात् तत्त्वज्ञानमेव मोक्षोपाय इत्युक्तम्' इति च ।

एतन्मतानुसारेणैव हि ब्रह्मचारिणामसङ्कीर्णरूपेण द्विधा विभाग उपपद्यते । अन्यथा सर्वेषामपि कृते कर्मणो नान्तरीयकत्वे विभागोऽयं नोपपद्येत । उक्तञ्च भट्टैरेव—[3]'अत एव द्विविधो ब्रह्मचारी भवत्युपकुर्वाणो नैष्ठिकश्च ।' तत्रोपकुर्वाणो यो ब्रह्मचर्यमनुभूय गृहस्थाश्रममनुभवति, स चापरिपक्वकषायोऽनुपशान्तगार्हस्थ्यरागः । तमेव प्रतीदमुच्यते—

अनधीत्य द्विजो वेदाननुत्पाद्य च सन्ततिम् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥ इति ।

यस्तु परिपक्वकषायः स नैष्ठिक एव ब्रह्मचारी भवति, न गृहस्थाश्रमं प्रतिपद्यते, गृहस्थोऽपि परिपक्वकषायो वानप्रस्थाश्रममुल्लङ्घ्य यतित्वेऽधिक्रियते । यथोक्तम्—'गृहाद्वनाद्वा प्रव्रजेदिति' इति च ।

ननु

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारावती ज्ञेयाः सप्तैता मोक्षदायिकाः ॥

( गरुडपु० २।४६।११४ )

'काश्यां मरणान्मुक्तिः' इत्यादिवचनेन काशीमरणादिकर्मणां तत्त्वज्ञाननैरपेक्ष्येण मुक्तिहेतुत्वम् । एवञ्च मोक्षस्य तत्त्वज्ञानैकसाध्यत्वभङ्गापत्तिरिति चेन्न; वाराणसीप्रायणादेस्तत्त्वज्ञानफलकताया आगमादेव प्रतिपादितत्वेन दोषाभावात् । [4]"काश्यां तु ब्रह्मनालेऽस्मिन् मृतो मत्तारमाप्नुयात्' इत्युपनिषद्वाक्ये ब्रह्मनालमृतस्य तारकोपदेशोपलब्धिश्रवणात् । एतदेवाभिप्रेत्य [5]"अथ काशीमरणादीनां तत्त्वज्ञानोत्पादकत्वे किं मानम्' इत्युपक्रम्य 'मैवम्, तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुत्या तत्त्वज्ञानं विना न मुक्तिरिति प्रतिपादनात् काशीमरणादिस्थलेऽपि तत्त्वज्ञानमावश्यकमेव । एवं तत्त्वज्ञानविशिष्टमुक्तित्वापेक्षया लाघवात् किञ्चिदविशेषितस्य मुक्तित्वस्य जन्यतावच्छेदकत्वे सिद्धे तादृशकारणत्वोपपादिकायाः काशीमरणादिजन्यतत्त्वज्ञानस्य कल्पनायास्तन्नियामककारणत्वकल्पनायाश्च फलमुखगौरवसम्पादकत्वेनादोषत्वमित्यपि युक्तमुत्पश्यामः' इत्यादिसिद्धान्तं श्रीहरिरामतर्कवागीशा व्यवस्थापयामासुः ।

---

१. न्यायमञ्जरीप्रमेयप्रकरणे पृ० ९१ ।
२. न्यायमञ्जरीप्रमेयप्रकरणे पृ० ९१ ।
३. न्यायमञ्जरीप्रमेयप्रकरणे पृ० ८५ ।
४. मुक्तिकोपनिषद् ११९ ।
५. मुक्तिवादे पृ० ८८-८९ ।

न केवलं काशीमरणादिस्थलेऽपि त्वियमेव हि व्यवस्था योगाभ्यासादिना मुक्तिबोधकवाक्यस्थलेऽपि। अत एव योगशास्त्रे चित्तवृत्तिनिरोधानन्तरं गुणानां प्रतिप्रसवरूपकैवल्यस्य सम्प्राप्तौ तत्त्वज्ञानस्य मुक्तिं प्रति व्यभिचारो मा भूदिति मनसि निधाय [1]"योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः' इति सूत्रेण योगाङ्गानुष्ठानमोक्षयोर्मध्ये ज्ञानदीप्तिर्व्यवस्थापिता। एतदेवाभिप्रेत्य तर्कवागीशैरुक्तम्—

[2]"तत्त्वज्ञानन्तु कस्यचिद् योगाभ्यासवशात्, कस्यचित् काशीमरणात्, कस्यचिद् भगवन्नामग्रहणपूर्वकमरणादितो जायते। न चैषां परस्परव्यभिचारेण कारणत्वमसम्भवीति वाच्यम्, अनायत्या कारणवैशिष्ट्यं कार्यतावच्छेदककोटौ निवेश्य व्यभिचारवारणसम्भवात्।' इति।

निरस्यन्तश्च महता संरम्भेण ज्ञानकर्मसमुच्चयवादं ते व्यवस्थापयामासुर्ज्ञानैकसाधनतावादं ग्रन्थान्ते—

[3]"यत्तु स्वाश्रमविहितसन्ध्यावन्दनादिसहकृतमेव तत्त्वज्ञानं निःश्रेयसहेतुः। तथा च स्मृतिः—

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्॥ इति।
ज्ञानं प्रधानं न च कर्महीनं कर्म प्रधानञ्च न बुद्धिहीनम्।
तस्मात्तयोरेव भवेत् प्रसिद्धिर्न ह्येकपक्षो विहगः प्रयाति॥ इति।

तदसत्, तादृशकर्मणां तत्त्वज्ञानप्रतिबन्धकदुरितनिवर्त्तकतया प्रागपेक्षितत्वेनापातत उपकारकतयैव उभाभ्यामित्युपपत्तेस्तेषां मुक्तिकारणत्वे मानाभावादिति' इति।

औपनिषदास्तु [4]"अलेपकं सर्वगतं यदद्वयं तदेव चाहम्', [5]"अहमेव इदं सर्वम्' इत्याकारकनिष्ठात्मके ज्ञानयोगे कर्तृत्वज्ञानशून्यतायाः, कर्मयोगे तु तद्वत्ताया अवश्यं वक्तव्येन तयोः समुच्चयो व्याहतः। एवं सत्येव [6]"ज्यायसी चेत् कर्मणस्ते' इत्यादिरीत्या अर्जुनप्रश्नस्याप्युपपत्तिः। न हि कथमपि ज्ञानकर्मणोः समसमुच्चयः सम्भवति, कर्मणो यथाकथञ्चित् पुरुषसंस्कारद्वारा सन्निपत्योपकारकत्वेनोपयोगाज्ज्ञानवत्साक्षान्मोक्षसाधनत्वाभावात्। तदुक्तं श्रीमद्भगवत्पूज्यपादश्रीशङ्कराचार्यैः—

[7]"तस्माद् गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणा आत्मज्ञानस्य समुच्चयो न केनचिद् दर्शयितुं शक्यः' इति।

अन्यत्रापि तैः प्रतिक्षिप्तो ज्ञानकर्मसमुच्चयवादः—

---

१. योगसूत्रम् २।२८।
२. मुक्तिवादे पृ० ८१।
३. मुक्तिवादे पृ० ९०-९१।
४. मुक्तिकोपनिषद् २।७३।
५. उत्तरगीता १।४०।
६. श्रीमद्भगवद्गीता ३।१।
७. श्रीमद्भगवद्गीताशाङ्करभाष्यम् २।११।

[1]"यत्तु कैश्चिज्जल्प्यते—नित्यानि नैमित्तिकानि कर्माण्यनुष्ठीयन्ते प्रत्यवायानुत्पत्तये, काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्गनरकानवाप्तये, साम्प्रतदेहोपभोग्यानि च कर्माण्युपभोगेनैव क्षप्यन्त इत्यतो देहपातादूर्ध्वं देहान्तरप्रतिसन्धानकारणाभावात् स्वरूपावस्थानलक्षणं कैवल्यं विनापि ब्रह्मात्मतयैवंवृत्तस्य सेत्स्यतीति। तदसत्, प्रमाणाभावात्। न ह्येतच्छास्त्रेण केनचित् प्रतिपादितं मोक्षार्थीत्थं समाचरेदिति। स्वमनीषया त्वेतत्तर्कितम्—'यस्मात् कर्मनिमित्तस्संसारः, तस्मान्निमित्ताभावान्न भविष्यतीति। न चैतत् तर्कयितुमपि शक्यते, निमित्ताभावस्य दुर्ज्ञानत्वात्' इति।

पुनरन्यत्रापि—[2]"ससाधनं कर्म संन्यस्य शरीरयात्रामात्रचेष्टो यतिर्ज्ञाननिष्ठो मुच्यते' इति।

ननु तत्त्वज्ञानेनैव मोक्षसम्भवे कर्मणां तत्रोपयोगाभावात् पूर्वकृतकर्मणां वैयर्थ्यं प्राप्तम्। न चैतद्युक्तम् 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति वचनादिति चेन्न; तत्त्वज्ञानाददत्तफलान्येव कर्माणि प्रायश्चित्तादिव विनश्यन्तीत्यभ्युपगमात्, अनन्यथासिद्धशब्दैस्तन्नाशस्य शास्त्रेषु स्पष्टमुक्तत्वात्। तथा च श्रुतिः—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥[3] इति।

स्मृतिरपि—

ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन।[4] इति।

'नाभुक्तं क्षीयते कर्म्म' इत्यत्र च प्रायश्चित्तादिस्मृतितः संकोचस्यावश्यकत्वेन कर्म्मपदस्य शब्दबोधितनाशकानाश्यकर्म्मपरत्वमेव लाघवात्। न तु प्रातिस्विकरूपेण तत्तत्प्रायश्चित्तनाश्यान्यकर्मपरत्वम्, गौरवात्; पापपुण्यक्षयहेतूनां बहुतरत्वात्।

ननु कर्मणो ज्ञाननाश्यत्वं भोगद्वारापि सम्भवतीत्यबाधे सम्भवति बाधकल्पना नोचितेति चेत्, न; कर्मणो भोगनाश्यत्वे ज्ञानस्य तत्राकिञ्चित्करतापातात्। न हि भोगस्तत्त्वज्ञानव्यापारः, कुत्राप्यश्रवणात्। तेन विनापि कर्मण एव तदुपपत्तेश्च। कर्म्मणो भोगेनैव नाशसम्भवे तत्त्वज्ञानप्रयुक्ततन्नाशबोधकपूर्वोदाहृतश्रुतिस्मृतीनां वैयर्थ्यापाताच्च।

अधुना तु तत्तन्मते मोक्षसाधनीभूतस्यात्मज्ञानस्य स्वरूपम्, मोक्षरूपफलपर्यन्तं तदावर्तनविधिश्च विमृश्यते।

तत्र मीमांसकमतानुसारेणात्मज्ञानमुपनिषत्सु द्विविधं श्रूयते—क्रत्वर्थं पुरुषार्थं चेति। तत्र प्रथमं देहाद्विवेकज्ञानरूपम् [5]"अविनाशी वाऽरेऽयमात्मा' इत्यादिश्रुत्युपदिष्टम्। तच्च

१. ब्रह्मसूत्रशाङ्करभाष्यम् ४।३।५।
२. श्रीमद्भगवद्गीताशाङ्करभाष्यम् ४ २१।
३. मुण्डकोपनिषद् २।२।८।
४. श्रीमद्भगवद्गीता ४।३७।
५. बृहदारण्यकोपनिषद् ४।५।१४।

कर्मानुष्ठानोपयुक्तम् [१]"ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिविधिवाक्यप्रतिपाद्यकर्मणि प्रवर्त्तकत्वादन्यथा देहातिरिक्तात्मज्ञानं विना प्रवृत्तेरेवासिद्धेः। तथा चोक्तम्—

आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम्।
कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते ॥[२] इति।

द्वितीयं तु प्राणायामादीतिकर्त्तव्यताविशेषसंयुक्तोपासनात्मकेभ्यः 'आत्मेत्येवोपासीत' इत्यादिवाक्येभ्यः प्रतिपादितम्; तादृशज्ञानस्य कर्मणि पुरुषे च दृष्टप्रयोजनाभावाददृष्टापेक्षायामङ्गत्वबोधकश्रुत्याद्यभावेन क्रत्वर्थत्वासम्भवे निःश्रेयसफलकतया पुरुषार्थत्व एव पर्यवसानम्। इदमेवाभिप्रेत्योक्तं श्रीसोमेश्वरभट्टैः—

[३]"अत एवात्मा ज्ञातव्य इत्येतन्मोक्षार्थम्, न च चोदितमित्यत्रैतच्छब्दप्रयोगेण संसारिरूपात्मज्ञानस्यैव कर्मप्रवृत्तिहेतुतोक्ता। असंसारिरूपात्मज्ञानस्य तु कर्मप्रवृत्त्यर्थत्वायोगात् पुरुषार्थतैव युक्तेत्याशयः' इति।

इदन्त्विहावधेयम्—प्रारब्धकर्मणो भोगेन क्षयसम्भवे काम्यप्रतिषिद्धयोर्वर्जनादेवानुत्पत्त्या धर्माधर्मयोरनुत्पादसिद्धौ नित्यनैमित्तिकयोरनुष्ठानेन च प्रत्यवायाभावोपपत्तावात्मज्ञानस्य तत्रापि द्वितीयप्रकारकस्य कुत्रोपयोगो मीमांसकमत इति विचारणीयम्। न ह्यत्र नैयायिकादिमतवदात्मयाथात्म्यज्ञानेन मिथ्याज्ञानापायस्ततो दोषापाय इत्यादिरीत्योपपत्तिसम्भवः, तथा सति प्रसिद्धस्य तन्मतसिद्धज्ञानकर्मसमुच्चयनिष्ठमोक्षसाधनत्वस्य भङ्गापत्तेः, एतन्मोक्षानुष्ठानप्रकारस्य मीमांसकैरनङ्गीकाराच्च। तथा चैतन्मतानुसारेण मोक्षानुष्ठान आत्मज्ञानस्य वैयर्थ्यमेव प्रतिभाति। तत्रोच्यते—काम्यकर्म्मणां प्रतिषिद्धकर्म्मणां च वर्जनमेव न सम्भवति ऋत आत्मज्ञानात्, काम्यविषयेषु रागस्यासङ्गात्मज्ञानेनैव परिह्रियमाणत्वात्, प्रतिषिद्धविषयेषु रागस्य च कर्म्मप्रवृत्तिहेतुतोपयुक्तसंसारिरूपात्मज्ञानेन प्रथमप्रकारेणापाकरणीयत्वाच्च।

आत्मज्ञानञ्चैतन्मत उपासनमेव। एवञ्चैतन्मत आत्मानमुपासीतेत्यादिविधौ कीदृशमात्मानमुपासीतेति जिज्ञासायाम्—[४]"य आत्मापहतपाप्मा विजरो विमृत्युः विशोकः विजिघत्सः, अपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्यादिवाक्यानि शुद्धात्मस्वरूपं निर्दिशन्ति।

अत एवासङ्गकूटस्थात्मविषयकविवेचनावसरे भट्टैरुक्तम्—

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयस्तु बोधः प्रयाति वेदान्तनिषेवणेन ॥[५] इति।

---

१. सांख्यतत्त्वकौमुद्यां कारिकाव्याख्यानेन ४ पृष्ठ उद्धृतः।
२. श्लोकवार्त्तिकम्, सं० आ० परि० श्लोकः १०३।
३. न्यायसुधा, पृ० ३२६।
४. छान्दोग्योपनिषद् ८।७।१।
५. तर्कपादीयभट्टकारिका पञ्चमसूत्रस्थात्मवादान्ते, पृ० ७२७-७२८।

तथा चैभिर्मोक्षकारणीभूतस्य द्वितीयप्रकारकात्मज्ञानस्य पुरुषार्थरूपस्य सिद्धौ वेदान्तदर्शन एव निर्भरो विहितः। अन्यत्रापि च तैः स्पष्टरूपेण वेदान्तशास्त्रानुसारेण-वात्मविचारः कर्त्तव्य इत्युपदिष्टम्। तथा चोक्तम्—

निषिद्धकाम्यकर्मभ्यः सम्यग्व्यावृत्तचेतसः।
नित्यनैमित्तिकप्रायश्चित्तप्रध्वस्तदुष्कृतेः ॥
सुखदुःखानुभूतिभ्यां क्षीणप्रारब्धकर्मणः।
युक्तस्य ब्रह्मचर्याद्यैरङ्गैः शमदमादिभिः ॥
कुर्वाणस्यात्ममीमांसां वेदान्तोक्तेन वर्त्मना।
मुक्तिः सम्पद्यते सद्यो नित्यानन्दप्रकाशिनी ॥[१] इति।

## न्यायशास्त्रानुसारेण तद्विमर्शः

न्यायमते तु प्रमाणप्रमेयादीनां षोडशपदार्थानामुद्देशलक्षणपरीक्षासु प्रवर्तनं प्रथमं सोपानम्। तदुक्तं प्रथमसूत्रे—

[२]'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति। ताभिश्च परीक्षाभिरात्मशरीरादीनां द्वादशविधप्रमेयाणां स्वरूपं निष्कृष्यते। तानि च प्रमेयाणि—[३]'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति सूत्रोक्तानि। तेन चात्मद्वय( जीवात्मपरमात्मरूपात्मद्वय )साक्षात्कार इतरप्रमेयेभ्यो भिन्नत्वेन स्वात्मसाक्षात्कारश्च श्रवणमननिदिध्यासनैर्दृढीभूत उत्पद्यते। कीदृशश्चात्मज्ञानमिति विषये जयन्तभट्टैरुक्तम्—[४]'भिन्नास्तावदात्मान इति गृह्यतामात्मज्ञानमेव च निःश्रेयसाङ्गम्' इति।

साक्षात्कारे च निर्वृत्ते सवासनमिथ्याज्ञाननिवृत्तिः। तन्निवृत्तौ च तत्कार्याणां रागद्वेषमोहानां निवृत्तिः। ततस्तत्कार्ययोधर्माधर्मयोरुन्मूलनम्। ततश्च पूर्वोपार्जितकर्मणां कायव्यूहपूर्वकभोगेन क्षयात् शरीरान्तरानारम्भः। तदनन्तरं बाधनालक्षणादेकविंशतिदुःखादत्यन्तविमोक्षोऽपवर्गः। एकविंशतिदुःखानि च शरीरम्, षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखम्, दुःखं चेति। सुखमपि दुःखानुषक्तत्वाद् दुःखमेव। तदुक्तमुद्द्योतकरैः।

[५]'सुखमुपभोक्तुकामेन दुःखमपि भोक्तव्यमेव, दुःखं वा जिहासता सुखमपि हातव्यमेव, सविषान्नवत्।' इति।

न चात्र श्रोत्रमनसोर्नित्यतया कथं तन्निवृत्तिरुचितेति वाच्यम्, स्वरूपसहकारिनाशान्यतरलक्षणाया निवृत्तेर्विवक्षितत्वात्, श्रोत्रमनोभिन्नानां स्वरूपनाशलक्षणाया निवृत्तेः, श्रोत्रमनसोर्धर्माधर्मरूपसहकारिनाशरूपाया निवृत्तेः स्वीकारात्। उपर्युक्तः मोक्षप्रकारो भाष्ये स्पष्टीकृतः—

---

१. मानमेयोदये द्रव्यप्रकरणे पृ० २११।
२. न्यायसूत्रम् १।१।१।
३. ,, ,, १।१।९।
४. न्यायमञ्जर्यां द्वितीयाह्निके पृ० ९२।
५. न्यायवार्तिकम् १।१।२।

[1]"यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति, तदा मिथ्याज्ञानापाये दोषा अपयन्ति, दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्मापैति, जन्मापाये दुःखमपैति, दुःखापाये चात्यन्तिकोऽपवर्गो निःश्रेयसमिति' इति ।

अथाधुनैतच्छास्त्रानुसारेणापवर्गपर्यन्तं तत्त्वज्ञानाभ्यासविधिरुपवर्ण्यते। तत्र हेयरूपसंसारस्य कारणं कर्माणि दोषाश्च। अपवर्गस्य कारणञ्च हेयादिपदार्थानां हेयत्वादिरूपेण दृढसाक्षात्कारपूर्वको दृढात्मसाक्षात्कारः। स च श्रवणमननान्तरं निदिध्यासनरूपाभ्यासे परिपक्वे जाते तदुत्तरं समाध्यभ्यासे च सम्पन्ने सति जायते। उक्तञ्च भाष्ये—[2]"एवं चतसृभिर्विधाभिः प्रमेयं विभक्तमासेवमानस्य अभ्यस्यतो भावयतः सम्यग्दर्शनम्, यथाभूतावबोधस्तत्त्वज्ञानमुत्पद्यत' इति।

सूत्रेऽपि—[3]'समाधिविशेषाभ्यासात्' इति ।

समाधिस्तु [4]'तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः', [5]'प्रच्छर्दनविधारणाभ्यां वा प्राणस्य' इत्यादियोगशास्त्रप्रोक्तेन निरोधकप्रयत्नेन गन्धादिविषयेभ्यो निरुद्धस्य मनसो यस्तत्त्वजिज्ञासाप्रयुक्त आत्मसंयोगस्तद्रूपः, [6]"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इति सूत्रे मात्रपदेनातिरिक्तसर्वविषयाणां व्यावर्त्तनसूचनात् ।

नन्विच्छाया अभावेऽपि मेघादिगर्जने सति शब्दादिबुद्धिर्यथा भवत्येव, तथैव गन्धादिविषयस्यापि प्राबल्यात् समाधौ सत्यपि विषयज्ञानं भविष्यत्येव। एवञ्च समाधिबलेनेन्द्रियार्थविषयकं ज्ञानं नोत्पद्यत इति दुराशामात्रमेव। तथा च दृढसाक्षात्कारात्मकतत्त्वज्ञानानुपपत्तिः, क्षुत्पिपासादिभिर्योगिनोऽपि बाध्यमानत्वेन बाह्यविषयेषु प्रवृत्तेश्च जागरूकतायां सुतरां तदनुपपत्तिश्चेति चेन्न; पूर्वजन्मन्यनुष्ठितसमाधेः संस्कारबलात् पूर्वकृतसुकृतबलाच्चास्मिञ्जन्मनि समाध्युत्पत्तौ तत्त्वसाक्षात्कारे बाधकाभावात्। [7]'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्', [8]'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः' इति भगवतैवोक्तत्वाद्, वामदेवादीनां च पूर्वजन्मन्यनुष्ठितसमाधिबलेनैवास्मिञ्जन्मनि तत्त्वसाक्षात्कारोत्पत्तिदर्शनात्। तदुक्तम् [9]"पूर्वकृतफलानुबन्धात् तदुत्पत्तिः' इति। किञ्च समाधिप्रतिबन्धकपरिहारार्थमेवारण्ये गुहायां नदीतीरादिनिर्जनप्रदेश एव वा समाध्यनुष्ठानविधे-

---

१. न्यायभाष्यम् १।१।२।
२. " " ४।२।१।
३. न्यायसूत्रम् ४।२।३८।
४. योगसूत्रम् १।३२।
५. " १।३४।
६. " ३।३।
७. श्रीमद्भगवद्गीता ६।४३।
८. " " ६।४४।
९. न्यायसूत्रम् ४।२।४१।

योगशास्त्रेणोपदेशः क्रियते। तदुक्तं भगवता—[1]'योगी युञ्जीत सततमात्मानं रहसि स्थितः' इति। साक्षात्कारे च दृढे जाते पश्चात् पूर्वोक्तप्रतिबन्धका अपि न समाधिं निरोद्धुं शक्नुवन्ति। यथा हि मनसोऽन्यत्र संलग्नतादशायामिन्द्रियसंयुक्तस्यापि विषयस्य ग्रहणं न भवति, तथा मनसि समाधिसंलग्नेऽप्यर्थप्राबल्यस्याकिञ्चित्करत्वेन न समाध्यनुत्पत्तिः, न वा तत्त्वसाक्षात्कारानुपपत्तिरिति। तदुक्तम्—[2]'नैनां प्राप्य विमुह्यति' इति 'सम्यगालोचनात् सत्याद् वासना प्रविलीयते' इति च।

सम्यगालोचनाद्वासनाविलयं शब्दान्तरेण भणति न्यायभाष्यम्—[4]'वर्जनं त्वस्याभेदेनावयवसंज्ञा केशलोममांसशोणितास्थिस्नायुशिराकफपित्तोच्चारादिसंज्ञा। तामशुभसंज्ञेत्याचक्षते। तामस्य भावयतः कामरागः प्रहीयते।' इति।

अन्यत्रापि यथार्थदर्शनस्य रागप्रहाणकत्वमुक्तम्—

अत्रापि चान्यत्र च विद्यमानपदार्थसम्मर्शनमेव कार्यम्।
यथाप्रकारार्थगुणाभिमर्शनं सन्दर्शयत्येव तदीयदोषम् ॥[5] इति।
असङ्गव्यवहारत्वाद् भवभावनवर्जनात्।
शरीरनाशदर्शित्वाद् वासना न प्रवर्तते ॥[6] इति।

मुक्तावस्थायां च धर्माधर्मयोरभावेन शरीरेन्द्रियाणामभावात् सुतरामेव सर्वदुःखविमोक्षरूपोऽपवर्ग इति सर्वं सुसमञ्जसम्।

समाधेरभ्यासस्तु योगशास्त्ररीत्या भवतीति नैयायिकप्रभृतयः सर्वेऽप्यास्तिका आमनन्ति। उक्तञ्च न्यायसूत्रे—[7]'तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः।' इति। तत्र सर्वैरपि [8]'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति लक्षणलक्षिता यमाः पालनीयाः, सर्वेषामपि वर्णाश्रमिणामेतेष्वनधिकारसूचकश्रुतिस्मृत्याद्यभावात्। [9]'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति सूत्रोक्ता नियमास्तु प्रतिवर्णाश्रमं भिन्नाः [10]'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इति भगवद्वाक्येन

---

१. श्रीमद्भगवद्गीता ६।१०।
२. " " २।७२।
३. मुक्तिकोपनिषद् २।१७।
४. न्यायभाष्यम् ४।२।३।
५. सर्ववेदान्तसिद्धान्तसारसंग्रहे श्लोकः २६ तमः।
६. मुक्तिकोपनिषद् २।२८।
७. न्यायसूत्रम् ४।२।४६।
८. योगसूत्रम् २।३०।
९. " २।३२।
१०. श्रीमद्भगवद्गीता १८।४५।

तथैव सूचनात् तत्र च कर्मपदस्य शौचसन्तोषतपःप्रभृतितत्तद्वर्णाश्रमविहितनियमस्योपलक्षकत्वात्। एतदेवाभिप्रेत्य न्यायभाष्येऽप्युक्तम्—

[१]'यमः समानमाश्रमिणां धर्मसाधनम्, नियमस्तु विशिष्टम्' इति। अन्यान्यपि योगाङ्गानि समाध्यभ्यासार्थमुपादेयानीति सूचनार्थं यमनियमाभ्यामिति पदात्[२] पृथग्योगाच्चेत्यादेरुपादानम्। तथा चावशिष्टानि आसनप्राणायामप्रत्याहारधारणाध्यानान्यपि समाध्यर्थमनुष्ठेयानि। तत्रासनानि करचरणादिसंस्थानसंयोगविशेषरूपाणि सिद्धस्वस्तिकशीर्षपद्मादीनि, कानिचिद्

आसनेन रुजं हन्ति प्राणायामेन पातकम्।
धारणाभिश्च दहेद् दोषान् ध्यानेनानीश्वरान् गुणान्॥[3]

इति वचनाद् रुजोहननद्वारा कानिचिच्च साक्षादेव चित्तैकाग्र्यसाधनानीति ध्येयम्। [४]श्वासप्रश्वासयोर्गतिविच्छेदरूपः प्राणायामः साक्षादेव चित्तैकाग्र्यसाधनम्, समाधिप्रतिबन्धदुरितप्रतिबन्धी च। तदुक्तम्—

द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः॥[५] इति।
अध्यात्मविद्याधिगमः साधुसङ्गतिरेव च।
वासनासम्परित्यागः प्राणस्पन्दनिरोधनम्॥
एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल।[६] इति।

प्राणायामे च सिद्धे चित्तस्य बाह्यविषयेभ्यो निरोधरूपः प्रत्याहारः सिध्यति। तदुक्तम्—

[७]'स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः' इति। ततः क्रमेण "[८]देशबन्धश्चित्तस्य धारणा', [९]'तत्र प्रत्ययैकतानता ध्यानम्', [१०]'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' इत्यादिलक्षणलक्षिता धारणाध्यानसमाधयः सिध्यन्ति। ततश्च तत्त्वसाक्षात्कार इति। इदन्त्विहावधेयम्—निदिध्यासनात् पूर्वं श्रवणकाल एव

---

१. न्यायभाष्यम् ४।२।४६ सूत्रे।
२. ४।२।४६ सूत्रस्थात् 'यमनियमाभ्याम्' इति पदादिति बोद्धव्यम्।
३. योगसूत्रे २।४९ तम उक्तः।
४. मुक्तिकोपनिषद् २।२८।
५. योगचूडामण्युपनिषद् १०९।
६. मुक्तिकोपनिषद् २।४४-४५।
७. योगसूत्रम् २।५४।
८. " ३।१।
९. " ३।२।
१०. " ३।३।

श्रीगुरुचरणसकाशेऽध्ययनेन सह गृहीतपदार्थानां युक्तीनां च पौनःपुन्येन चिन्तनं सतीर्थ्यै-र्मोक्षार्थिभिर्विशिष्टैश्च कृततत्त्वसाक्षात्कारैः सार्धं संवादो ज्ञानपरिपाकार्थमावश्यक-स्तेनैव वर्तमानसंशयानाम् , मननकाले च सम्भवावितसंशयानामुच्छित्तिर्भवति। अन्यथै-काक्यवस्थायां कस्यचित् संशयस्य स्फुरणे स्वयं तद्वारणार्थमधिकः कालः परिश्रमश्चा-पेक्षितः स्यान्निदिध्यासनादीनाञ्च, तेन विलम्बापत्तिः, तदुक्तं सूत्रद्वयेन—[१]'ज्ञानग्रहणाभ्यास-स्तद्विद्यैश्च सह संवादः।' [२]'तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनुसूयुभिरभ्यु-पेयात्' इति।

## वैशेषिकशास्त्रानुसारेण मोक्षार्थं ज्ञानानुष्ठानप्रकारः

पूर्ववद् वैशेषिकशास्त्रानुसारेणापि यदा जीवो निष्कामः सन् तत्त्वज्ञानसाधनं योगा-त्मकं यमनियमादिरूपमात्मकर्म सम्यगनुतिष्ठति, तदाऽस्य साधनपरिपाके जाते आचार्योप-सङ्गमनानन्तरं द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां विवेचनेन जातं यत्तत्त्वज्ञानं तत्पूर्वकादात्मतत्त्वसाक्षात्कारादीश्वरोपासनासहितात् कैवल्यं भवतीत्यभ्युपेयते। तदुक्तम्—

[३]'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्।' इति, [४]'आत्मकर्मसु मोक्षो व्याख्यातः' इति च।

अत्रापि शास्त्र आत्मकर्मरूपो योगो वैराग्याभ्यासाभ्यामात्ममात्रनिष्ठे मनसि कर्मानु-गुणप्रयत्नाभावात् कर्मानारम्भरूपः, फलतश्च जीवस्य दुःखहेतूनां प्रमाणादिवृत्तीनामभाव-रूपः। उक्तं च—

[५]'तदनारम्भ आत्मस्थे मनसि, शरीरस्य दुःखाभावः संयोगः।' इति, तदेतत् सर्वमभि-प्रेत्योक्तं श्रीप्रशस्तपादाचार्यैरपि—

[६]'ज्ञानपूर्वकात्तु कृतादसंकल्पितफलाद् विशुद्धे कुले जातस्य दुःखविगमोपायजिज्ञासो-राचार्यमुपसंगम्योत्पन्नषट्पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रागद्वेषाद्यभावात् तज्जयो-र्धर्माधर्मयोरनुत्पत्तौ पूर्वसञ्चितयोश्चोपभोगान्निरोधे सन्तोषसुखं शरीरपरिच्छेदं चोत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणः केवलो धर्मः परमार्थदर्शनजं सुखं जनयित्वा निवर्तते। तदा

---

१. न्यायसूत्रम् ४।२।४७।
२. " ४।२।४८।
३. वैशेषिकसूत्रम् १।१।४।
४. " ६।२।१।
५. " ५।२।१६।
६. प्रशस्तपादभाष्यम् ४२ तने संसारापवर्गप्रकरणे। ( २१४, २१६, २५६ वैशेषिकसूत्रार्थप्रतिपादक-मिदम् )।

निरोधात् निर्बीजस्यात्मनः शरीरादिनिवृत्तिः। पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्षः' इति।

## सांख्यशास्त्रानुसारेण तदनुष्ठानप्रकारः

एतन्मतानुसारेण प्रकृतिपुरुषयोरविवेककृतः संयोग एव बन्धः, प्रकृतिपुरुषान्यतासाक्षात्कारादविवेकोच्छेदे मोक्ष इत्यादिविषयाः [१]'सत्त्वपुरुषान्यताप्रत्ययः साक्षात्कारो दुःखापघातको हेतुः; [२]'प्रधानेन संभिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते, तच्च सत्त्वपुरुषान्यताख्यातिनिबन्धनम्' इत्यादिसंख्यतत्त्वकौमुद्यादिग्रन्थेषु सम्यङ् निरूपिताः।

येभ्यो विवेचनीयः पुरुषस्ते पदार्था अपि कारिकायां स्पष्टमभिलक्ष्यन्ते—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥[३] इति।

ज्ञानस्य मोक्षकारणत्वं तु—

रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण॥[४]

इति कारिकाव्याख्याने 'एकरूपेण' 'तत्त्वज्ञानेन विवेकख्यात्या विमोचयति' इति तत्त्वकौमुद्यामुक्तम्।

कीदृशञ्च तत्त्वज्ञानमिति तूपरिष्टात् कारिकायामुक्तम्—

एवं तत्त्वाभ्यासान्नास्मि, न मे, नाऽहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्॥[५] इति।

एवञ्च न्यायशास्त्रवदत्रापीतरभिन्नत्वेनात्मज्ञानं मोक्षकारणम्। तत्र त्वसत्कार्यवादावलम्बनेन बन्धावस्थायां तात्त्विको बन्ध आत्मनि च कर्तृत्वादिकं वास्तवं स्वीक्रियते। अत्र तु सत्कार्यवादाभ्युपगमात् पुरुषस्य बन्धमोक्षौ न वास्तवौ, तयोर्बुद्धिधर्मत्वात् [६]'वाङ्मात्रं न तु तत्वं चित्तस्थितेः' इति सूत्रे 'बन्धादीनां सर्वेषां चित्त एवावस्थानात् तत् पुरुषे वाङ्मात्रं सर्वम्' इति तद्भाष्ये च तथैव प्रतिपादनात्।

आत्मज्ञानस्य स्वरूपं सम्यग्रूपेण स्पष्टीकृतं गौडपादभाष्ये [७]'एवमुक्तेन क्रमेण पञ्चविंशतितत्त्वालोचनाभ्यासादियं प्रकृतिः, अयं पुरुषः, एतानि पञ्चतन्मात्रेन्द्रियमहाभूतानीति

---

१. सांख्यतत्त्वकौमुदी २ कारिकायाम्, पृ० ६१।
२. ,, २१ ,, ,, २४४।
३. सांख्यकारिका ३।
४. ,, ६३।
५. ,, ६४।
६. सांख्यप्रवचनसूत्रम् १।५८।
७. गौडपादभाष्यम् ६४ कारिकायाम्।

पुरुषस्य ज्ञानमुत्पद्यते । नास्मि, ना अहमेव भवामि, न मे मम शरीरं तत्, यतोऽहमन्यः शरीरमन्यदित्यादिना ।

## योगाशास्त्रानुसारेण तद्विमर्शः

योगशास्त्रेऽपि सांख्यशास्त्र इव सत्त्वपुरुषान्यताज्ञानमेव मोक्षकारणं मतम् । तथा चोक्तम्—

[1]'सत्त्व पुरुषान्यताप्रत्ययो विवेकख्यातिः' इति ।

[2]'विवेकख्यातिरविप्लवा हानोपाय' इति च ।

तच्च ज्ञानं साक्षात्कारात्मकं संशयविपर्ययभिन्नम्, उपर्युक्तसूत्रे 'अविप्लवा'पदेन तस्य मिथ्याज्ञानसंशयाद्यनात्मकत्वसूचनात् । तथा चोक्तम्—

[3]'श्रुतमयेन ज्ञानेन विवेकं गृहीत्वा युक्तिमयेन च व्यवस्थाप्य दीर्घकालनैरन्तर्य-सत्कारासेविताया भावनायाः प्रकर्षपर्यन्तं समधिगता साक्षात्कारवती विवेकख्यातिर्निवर्तित-सवासनमिथ्याज्ञानानिर्विप्लवा हानोपाय' इति ।

तादृशं च ज्ञानं प्रणवोपासनापूर्वकाभ्यासवैराग्याभ्यां चित्तवृत्तिनिरोधानन्तरं निर्वि-चारवैशारद्येनाध्यात्मप्रसादानन्तरं वा सबीजसमाधिपूर्वकनिर्बीजसमाधौ जातायां गुणानां प्रतिप्रसवस्य सम्पद्यमाने सति, अथवा यमनियमादियोगाङ्गानुष्ठानादशुद्धिक्षये सति सम्पद्यते । सम्पन्ने च तादृशज्ञाने चितिशक्तेः स्वरूपप्रतिष्ठा वा द्रष्टुः स्वरूपेऽवस्थानं वा कैवल्यात्मकं पर्यवसन्नं भवति ।

नन्वस्मिन् शास्त्रे [4]'तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः' इति सूत्रतद्भा-ष्यादौ निर्विकल्पकज्ञानस्य मोक्षहेतुत्वमुक्तम्, तन्न युक्तम्, 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रुत्यनुरोधादात्मविशेष्यकस्यैव ज्ञानस्य मोक्षहेतुत्वाव-गमान्निर्विकल्पकज्ञानस्य चात्मविशेष्यकत्वानवगाहनादिति चेत्, सत्यम्; योगशास्त्रेण जन्यमानस्य निर्विकल्पकज्ञानस्यात्मविशेष्यकज्ञानद्वारैणैव मोक्षकारणत्वं कल्पनीयम्, न तु साक्षात्, तस्य निर्विशेष्यकनिष्प्रकारकत्वेन कस्यापि प्रतिबन्धकत्वप्रतिबध्यत्वाभावात्, अविद्यानिवर्त्तकत्वानुपपत्तेः। तथाहि 'अहं गौरः, कर्त्ता, सुखी, दुःखी' इत्यादिज्ञानरूपाया एव ह्यविद्यायाः श्रुतिस्मृत्यादौ संसारानर्थहेतुत्वस्य सिद्धत्वेन 'नाहं गौरः' इत्यादिरूपाया विवेक-ख्यातेरेव तद्ग्राह्याभावावगाहित्वेन प्रतिबन्धकत्वमुचितम्, अन्यथा शुक्तिनिर्विकल्पकस्यापि 'इदं रजतम्' इति ज्ञानविरोधित्वापत्तेः। एवञ्च सांख्यसम्मतमात्मज्ञानस्यैव मोक्षहेतुत्वमत्रापि पर्यवसन्नमिति प्रतिभाति ।

---

१. योगसूत्रव्यासभाष्यम् २।२६ ।
२. योगसूत्रम् २।२६ ।
३. व्यासभाष्यतत्त्ववैशारदी २।२६ ।
४. योगसूत्रम् १।५१ ।

## विशिष्टाद्वैतमतानुसारेण तद्विमर्शः

एतन्मते भक्तिरेव मोक्षसाधनम् , भगवत्कैङ्कर्यमेव परमपुरुषार्थः । भक्तिस्तु महनीयविषये प्रीतिरूपाऽवस्थाभेदात् परमभक्त्यादिरूपत्वमवाप्नोति । कर्मणो ज्ञानस्य वा तयोः समुच्चयस्य वा नैतन्मते साक्षान्मोक्षसाधनत्वम् , अपि तु भक्तिद्वारेणैव । तदुक्तम्—[१]'मोक्षोपायत्वेनोक्तानां कर्मयोगज्ञानयोगप्रभृतीनां भक्तिद्वारैव साधनत्वम्' इति । श्रीवेदान्तदेशिकैरपि—

[२]'भक्तियोगः परमप्राप्त्युपायभूतः । तदशक्तस्य तद्भक्तियोगसिद्ध्यर्थमवलोकनमपेक्षितम् । तस्य च ज्ञानयोगकर्मयोगौ द्वौ पृथगुपायौ । तत्र ज्ञानयोगः स्वात्मावलोकनेऽन्तरङ्गः । तथापि प्रथमं स दुष्करः । तदनधिकारिणस्तुल्यफलः कर्मयोग एव कार्यः । तदधिकारिणोऽपि व्यपदेश्यस्य लोकसङ्ग्रहार्थं कर्मयोग एव कार्यः । अशक्तस्य ज्ञानयोगशक्तिं कर्मयोग एवोत्पादयति । तदा कर्मयोगं परित्यज्य ज्ञानयोगमनुतिष्ठतोऽपि न दोषः ।' इति ।

तत्र भक्तियोगो नाम योगशास्त्रप्रोक्तयमाद्यष्टाङ्गयोगपूर्वकस्तैलधारावदविच्छिन्नस्मृतिसन्तानरूपः । तत्साधनानि श्रीनिवासदासैरुक्तानि —

[३]'स च विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षरूपसाधनसप्तकजन्यः । तत्र विवेको नाम जात्याश्रयनिमित्तदुष्टान्नात् कायशुद्धिः । विमोकः कामानभिष्वङ्गः । अभ्यासः पुनः पुनरालम्बनसंशीलनम् । शक्तितः पञ्चमहायज्ञाद्यनुष्ठानं क्रिया । कल्याणानि सत्यार्जवदयादानाहिंसादीनि । अनवसादो दैन्याभावः । अनुद्धर्षस्तुष्ट्यभावः । अतिसन्तोषश्च विरोधीत्यर्थः । एवं साधनसप्तकानुगृहीता भक्तिर्दर्शनसमानाकाराऽन्तिमप्रत्ययावधिका च भवति ।' इति ।

अत्र जातिदुष्टं कलञ्जगृञ्जनादि । आश्रयदुष्टत्वं पतितादिस्वामिकत्वम् , निमित्तदुष्टमुच्छिष्टादि ।

अत्र मते जीवस्य मोक्षावस्थायां शेषात्मकपर्यङ्कारोहणं स्वरूपाविर्भाव ईश्वरवदपहतपाप्मत्वसत्यसङ्कल्पत्वादिगुणवत्ता च भवन्ति ।

## औपनिषददर्शनानुसारेणान्यरीत्या ज्ञानानुष्ठानप्रकाराणां पर्यालोचनम्

औपनिषदास्तु वैशेषिकसम्मतषट्पदार्थतत्त्वज्ञानं नैयायिकाभिमतषोडशपदार्थतत्त्वज्ञानं वा न मोक्षहेतुः, प्रमाणाभावात् । कणादगौतमादिप्रणीतशास्त्राणां लोकसिद्धयुक्तिशास्त्रत्वेन श्रुत्यैकगम्ये मोक्षपदार्थे तत्साधने वा प्रामाण्याभावात् । '[४]मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिश्रुतिबाधितत्वाच्च ।

किञ्च सामान्याकारेण पदार्थतत्त्वज्ञानस्य हेतुत्वाभ्युपगमे सर्वेषामपि प्रमेयत्वादियत्किञ्चिद्रूपेण तत्सत्त्वेन सर्वमुक्तिप्रसङ्गः स्यात् , विशेषाकारेण सर्वविषयकतत्त्वज्ञानस्य

---

१. यतीन्द्रमतदीपिकासप्तमावतारे, पृ० ६१-६२ ।

२. न्यायसिद्धञ्जने, पृ० ३०७ ।

३. यतीन्द्रमतदीपिका, पृ० ६२-६३ ।

४. कठोपनिषद् २।४।११, बृहदारण्यकोपनिषद् ४।४।१९ ।

ब्रह्मणोऽप्यशक्यत्वेन मुक्त्यभावप्रसङ्गात्। द्रव्यत्वगुणत्वादिना वा ज्ञानस्य कारणत्वाभ्युपगमे सूत्रस्थविभागवचनादेव तल्लाभेन पृथिवीत्वजलत्वादिना तद्व्युत्पादनस्य वैयर्थ्यप्रसङ्गात्।

नन्वेतेषां सर्वेषां पदार्थानां तत्त्वज्ञानं न मोक्षकारणं किन्त्वेतादृशतत्त्वज्ञानेनात्ममात्रविषयकतत्त्वज्ञानोत्पत्त्या तेनैव मोक्षोत्पत्तिसम्भवस्तथा च तस्यैव मोक्षकारणत्वसम्भवे न काऽप्यनुपपत्तिरिति चेन्न, 'अहमस्मि' 'जानामि' इत्याकारकात्मज्ञानस्य सर्वजनसिद्धत्वेन तावतापि सर्वमुक्तेर्दुर्वारतापत्तेः। न चास्य परोक्षत्वं भ्रान्तित्वं वा परैरनुमन्यते। न चैतत्तत्त्वज्ञानस्यापरोक्षप्रमात्वेऽपि मिथ्याज्ञानवासनावशीकृतत्वान्न मिथ्याज्ञाननिवर्त्तकत्वमपि तु पदार्थतत्त्वविषयकश्रवणमननाद्युत्तरकालीन( श्रवणादि )परिपाकजनितज्ञानान्तरस्यैव तन्निवर्त्तकत्वमिति वाच्यम्; आत्मापरोक्षप्रमात्वेन वासनानिवर्त्तकत्वाभावस्य तत्रापि समानत्वेन मुक्त्यभावप्रसङ्गस्य तावतापि दुर्निवारत्वात्। एतस्मिंस्तत्त्वज्ञाने किञ्चिद्वैजात्यकल्पने प्रमाणाभावात्।

एवमेव सांख्यादिसम्मतप्रकृतिपुरुषविवेकेऽप्यनुपपत्तिस्तत्रापि सामान्याकारेण ज्ञानस्यातिसुलभत्वाद्विशेषाकारेण चाशक्यत्वात्। प्रपञ्चितञ्चैतत् सर्वं श्रीसदानन्दयतिभिः—

[1]"किं च प्रकृतिपुरुषविवेकस्य षट्पदार्थषोडशपदार्थविवेकस्य वा मोक्षहेतुत्वे न किमपि प्रमाणं पश्यामः। अलौकिकफलसाधनताया आगमैकवेद्यत्वात्' इति।

ज्ञानकर्मसमुच्चयस्य पूर्वं पर्यालोचितत्वेन मीमांसकमतं पूर्वमेव पर्यालोचितप्रायम्।

कर्माङ्गज्ञानस्य भक्तिद्वारा मोक्षसाधनत्वं वदत उपासनैकसाधनतावादस्यापि न विचारसहत्वं प्रतिभाति,

तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।[2]
यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते॥[3]
[4]'नेदं यदिदमुपासते'।

[5]"य एवं वेदाऽहं ब्रह्मास्मीति स इदं सर्वं भवति, योऽन्यां देवतामुपासतेऽन्योऽसावन्योऽहमस्मीति न स वेद' इत्यादिश्रुतिशतेन बाधितत्वात्।

अपि चोपासनायाः कैवल्यमुक्तिसाधनत्वेऽभ्युपगम्यमाने—

गुरूपदिष्टमार्गेण ध्यायन् मद्गुणमव्ययम्।
मत्सायुज्यं द्विजः सम्यग् भजेद् भ्रमरकीटवत्॥[6]

---

१. अद्वैतब्रह्मसिद्धौ, प्रथममुद्गरप्रहारे, पृ० ३०।

२. श्वेताश्वतरोपनिषद्, ३।८।

३. ईशावास्योप०, सं० ७।

४. केनोपनिषद्, १।४।

५. बृहदारण्यकोप०, १।४।१०।

६. मुक्तिकोपनिषद्, १।२४।

५

इत्यादिनोपासनायाः सायुज्यमुक्तिमात्रसाधनत्वकथनं श्रीभगवतो विरुध्यते। न च सायुज्यमुक्तिरेवात्र परम( कैवल्य )मुक्तित्वेन विवक्षिता, तथा सति [1]"इयं कैवल्यमुक्तिस्तु केनोपायेन सिध्यति' इत्यादिनोपरिष्टात् कैवल्यमुक्तिं प्रति पृथक्प्रश्नस्य [2]'माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये' इत्यादिना ज्ञानैकसाधनत्वपरकमाण्डूक्योपनिषदस्तत्साधकत्वकथनस्य चासङ्गत्यापत्तेः, भगवतैवाग्रे [3]"श्रवणमनननिदिध्यासनानि नैरन्तर्येण कृत्वा प्रारब्धक्षयाद् देहत्रयभङ्गं प्राप्योपाधिविनिर्मुक्तघटाकाशवत् परिपूर्णता विदेहमुक्तिः। सैव कैवल्यमुक्तिः' इत्यादिना कैवल्यमुक्तितत्साधनवेदान्तश्रवणादिकमुक्त्वा [4]"अतः सर्वेषां कैवल्यमुक्तिर्ज्ञानमार्गेणोक्ता' इत्यादिना ज्ञाने तत्साधनत्वं स्फुटतया व्यवस्थाप्य 'न सांख्ययोगोपासनादिभिः' इत्यादिना घोषेणोपासनायां तत्साधनत्वनिषेधाच्च।

स्वीचक्रुश्चैतन्मतस्था आचार्यवृद्धाः श्रीवरदराजाचार्या अपि भक्तेर्दुरितशान्त्यर्थत्वम् न तु कैवल्यार्थत्वम्

यथा हरीतकीखादः क्रियते दोषशान्तये।
तद्वद्दुरितशान्त्यर्थं क्रियतां हरिकीर्तनम्॥[5]

इत्यादिना।

प्रसिद्धञ्च दुरितशान्तेर्वेदान्तश्रवणाधिकारयोग्यतोपधायकत्वम् [6]"प्रशान्तचित्ताय शमान्विताय' इत्यादौ, [7]"नितान्तनिर्मलस्वान्तः' इत्यादौ च। अत एव 'भक्तिर्ज्ञानाय कल्पते' इत्यभियुक्ता अपि प्रवदन्ति। तदनुसारेण ज्ञानानुष्ठानविमर्शः।

अत्र मते स्ववर्णाश्रमधर्मानुसारेण निष्कामकर्मद्वाराऽन्तःकरणशुद्धौ जातायामात्मतत्त्वज्ञानानुकूलविवेकवैराग्यादिसाधनचतुष्टयसम्पत्तिर्जायते। तथा चोक्तं श्रीमद्भगवत्पादैः—

स्ववर्णाश्रमधर्मेण तपसा हरितोषणात्।
साधनं प्रभवेत् पुंसां वैराग्यादिचतुष्टयम्॥[8] इति

सम्पदनन्तरं चाधिकारे जात ईश्वरकृपया श्रोत्रियब्रह्मनिष्ठसद्गुरोः सान्निध्ये च सत्यध्यारोपापवादन्यायेन तत्त्वमसीत्यादिवाक्येभ्य आत्मज्ञानमुपदिश्यते। तदुक्तम्—

सर्वेन्द्रियाणां गतिनिग्रहेण भोग्येषु दोषाद्यवमर्शनेन।
ईशप्रसादाच्च गुरोः प्रसादाच्छान्तिं समायात्यचिरेण चित्तम्॥[9] इति

---

१. मुक्तिकोपनिषद्, १।२६।
२. ,, १।२६।
३. ,, प्रथमाध्यायान्ते, ऋचा ६।
४. ,, ,, ,, ।
५. शतदूषणीग्रन्थे ४ वादे, ५८ पृष्ठ उद्धृतम्।
६. मुण्डकोपनिषद्, १।२।१३।
७. 'निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः' इत्यादिना वेदान्तसारे, पृ० ४।
८. अपरोक्षानुभूतिः, श्लोकः ३।
९. सर्ववेदान्तसिद्धान्तसारसंग्रहे, श्लोकः १३६।

जन्मानेकशतैः सदादरयुजा भक्त्या समाराधितो
भक्तैर्वैदिकलक्षणेन विधिना सन्तुष्ट ईशः स्वयम्।
साक्षाच्छ्रीगुरुरूपमेत्य कृपया दृग्गोचरः सन् प्रभु-
स्तत्त्वं साधु विबोध्य तारयति तान् संसारदुःखार्णवात्॥[1] इति च

उक्तश्चायमर्थः [2]'यमेवैष वृणुते तेन लभ्यः' इत्यादिश्रुतावपि। उपदेशप्रकारोऽपि पूर्वोक्त एवोक्तः—

राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः॥[3] इति

आत्मज्ञानस्य स्वरूपन्तु—

सर्वं खल्विदं ब्रह्म[4]', 'नेह नानास्ति किंचन'[5]।
'अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विचित्रम्'[6]।
'अलेपकं सर्वगतं यदद्वयं तदेव चाहम्'[7]।

इत्यादिश्रुत्या 'वासुदेवः सर्वम्'[8], 'अहमेव इदं सर्वम्'[9] इत्यादिस्मृत्या च प्रोक्तं प्रमातृसहिताशेषजगतो ब्रह्मभावापत्तिरूपम्। तदुक्तम्—परमार्थविषयकं ज्ञानम्, एकमेवेद सर्वं ब्रह्म, अकर्तृ च'[10] इति।

'ब्रह्मविद्यायाः फलं सर्वभावापत्तिः'[11] इति, अहमाकाशवत्सर्वम्'[12] इति च। अभियुक्तैरपि वेदान्तसिद्धान्तत्वेनायं श्लोको भण्यते—

श्लोकार्द्धेन प्रवक्ष्यामि शृणु वक्ष्यामि सादरम्।
ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः॥ इति

इदन्त्विहावधेयम्—पूर्वोक्तसर्वभावापत्तिरूपफलपर्यन्तं ब्रह्मविद्योद्देशेन निष्कामभावनया विहितयज्ञाद्यनुष्ठानाद् नित्यानित्यवस्तुविवेकरूपप्रथमसाधनस्य प्रतिबन्धकीभूतश्चित्तदोषोऽपसार्यते! ततः परं नित्यानित्यवस्तुविवेकेनेहामुत्रफलभोगविरागप्रतिबन्धकश्चित्तदोषोऽपनीयते। तेन च विषयवैतृष्ण्येन शमदमादिसम्पत्तिप्रतिबन्धकचित्तदोषो

---

१. सर्ववेदान्तसिद्धान्तसारसंग्रहे, श्लोकः २५४।
२. कठोपनिषद्, १।२।२२।
३. वार्तिकमिदं सिद्धान्तलेशसंग्रहे, १२० पृष्ठ उद्धृतम्।
४. छान्दोग्योपनिषद्, ३।१४।१।
५. बृहदारण्यकोपनिषद्, ४।४।१९।
६. कैवल्योपनिषद्, २।१।
७. मुक्तिकोपनिषद्, २।७३।
८. श्रीमद्भगवद्गीता, ७।१९।
९. उत्तरगीता, १।४०।
१०. श्रीमद्भगवद्गीताशाङ्करभाष्यम्, २।११।
११. ब्रह्मसूत्रशाङ्करभाष्यम्, १।४।१०।
२२. आत्मबोधः, श्लो० ३५।

निवार्यते। पश्चाच्च शमदमादिभिर्मुमुक्षापरिपन्थिविपरीतप्रवृत्तिहेतुभूतश्चित्तदोषः प्रक्षाल्यते। ततोऽद्वितीयब्रह्मात्मैक्यविषयवेदान्तशयिततात्पर्यनिश्चयफलकेन तात्पर्यनिर्णायकषड्विधलिङ्गोपेतेन श्रवणेनाद्वितीयब्रह्मात्मैक्ये वेदान्तवाक्यानां प्रामाण्यासम्भवरूपश्चित्तदोषोऽभिहन्यते। एवं प्रमेयसम्भावनाफलकेन मननाख्यतर्केण प्रमातृबुद्ध्युत्प्रेक्षितशुष्कतर्कप्रयुक्तप्रमेयासम्भवरूपश्चित्तदोषः प्रतिहन्यते। ततश्चान्यानुपरक्तब्रह्मात्मैक्यविषयसंस्कारप्रचयेन निदिध्यासनेनानादिप्रवृत्तदेहात्मज्ञानजनितसंस्कारप्रचयरूपश्चित्तदोषोऽपसार्यते। तदनन्तरञ्चाशेषदोषशून्ये स्वभावेनैव स्वच्छे चित्तदर्पणे वेदान्तवाक्येन जनिता अखण्डवाक्यार्थविषया अप्रतिबद्धा वृत्तिः स्वतः प्रामाण्यादेव कृत्स्नमज्ञानतत्कार्यं च निवर्तयति। तदुक्तम्—

पुरुषापराधमलिना धिषणा निखऽ्यचक्षुरुदयापि यथा।
न फलाय भर्त्सुविषया भवति श्रुतिसम्भवापि तु तथात्मनि धीः॥
पुरुषापराधविगमे तु पुनः प्रतिबन्धकव्युदसनात् सफला।
मणिमन्त्रयोरपगमे तु यथा सति पावकाद् भवति धूमलता॥
पुरुषापराधनिवृत्तिफलः सकलो विचार इति वेदविदः।
अनपेक्षतामनुपरुध्य गिरः फलवद् भवेत् प्रकरणं तदतः॥[१] इति

तस्मादौपनिषद्दर्शने विचारेण केवलं दोषापगम एव भवतीति स्वीक्रियते। न च किञ्चित्फलमाधीयते। तदुक्तम्—

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥[२] इति



१. संक्षेपशारीरके, १।१४।
२. माण्डूक्यकारिका, २।३२।

# अकारादिध्वने रेखाकृतिस्वरूपम्

डॉ० रामनारायणदासः

वरिष्ठानुसन्धाता (यू०जी०सी०)—वा० सं० वि० वि०

( अत्र भाषाविज्ञानदृशा लिपितत्त्वं विमृश्य तत्र भौतिकविज्ञानं तन्त्रशास्त्रञ्चाश्रित्य स्वविचारः समुपस्थापयिष्यते । )

बहिर्जगति व्यवह्रियमाणं द्विधा ध्वनितत्त्वं परिलक्ष्यते । १—रेखया अङ्कितं स्वरूपम्, २—उच्चारणात्मकम् यद्वा अभिव्यक्तात्मकम् । अत्र रेखया अङ्कितस्यैव स्वरूपस्य परिचयः प्रदास्यते ।

दार्शनिका वैयाकरणा ध्वने रेखया अङ्कितमपि ( लिप्यात्मकम् ) स्वरूपं स्वीकुर्वन्ति । तदुक्तं श्रीभर्तृहरिणा वाक्यपदीयस्य ब्रह्मकाण्डे—

यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः ।
शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत् ॥

'यस्मिन् स्फोटेऽक्षरस्मृतेः चिह्नानि इव लिपय इव वाचो निमित्तानि घटपटादिवाचां कारणानि शब्दपूर्वेण शब्दाभिव्यक्तिपूर्वभाविध्वनिना योगेन सम्बन्धेन प्रतिबिम्बवद् भासन्ते, स स्फोटः' इति भर्तृहरिप्रोक्तकारिकाया अर्थः । अकाराद्यक्षराणां स्मारकत्वाल्लिपिरपि तेषां स्वरूपं स्वीक्रियतेऽस्माभिः । भाषावैज्ञानिका अर्ष्टेवाण्टमहोदया अकारादिध्वनेरुच्चारणात्मकस्वरूपापेक्षया रेखयाङ्कितस्य स्वरूपस्याधिकं महत्त्वं व्याचक्षते स्म[१] । भाषाशास्त्रिभिरैतिहासिकैर्लिपिविषये बहवो विचाराः प्रदर्शिताः । तद्यथा केचिद् विचारा अधस्तात् प्रस्तूयन्ते—

"अकाराद्यक्षराणां द्विधाकृतिः । अकारादिवर्णानामुच्चारणक्षणे मुखं यामाकृतिं भजते, सा प्रथमाकृतिः, द्वितीया चाकृती रेखया कर्गलादिपत्रेषु निर्मीयते । इयमेवाकृतिर्लिपिनाम्ना प्रोच्यते । जगति वर्णानां यावन्त्यो लिपयो दृश्यन्ते, तासां मध्ये वैदिकलिपिरकाराद्यक्षरार्थानुरूपा । रोमनलिपिस्त्वेतादृशं गुणं न भजते ।

---

१, Here is a wide spread impression that the written word is the norm or modal of human speach, while the spoken word is a more or less falty imitation—E. H. sturtevant linguistic change P. N.

हस्ताङ्गुलिगृहीतलेखनीव्यापारेण लिप्यात्मकस्वरूपस्याभिव्यक्तिर्जायते। चक्षुरिन्द्रियेण च तस्य ग्रहणं क्रियते। तत्तद्वर्णानां लिप्यात्मकं स्वरूपं चक्षुषा परिगृह्य "एतेन लिप्यात्मकस्वरूपेणायं वर्ण उच्चारयितव्यः" इति बुद्ध्या निश्चित्य तेषामुच्चैर्यद्वा मनस्युच्चारणं क्रियते। नारदस्मृतौ तु वर्णानां लिप्यात्मकं स्वरूपं चक्षूरूपेण स्मृतम्। तद्यथा—

नाकरिष्यद् यदि ब्रह्मलिखितं चक्षुरुत्तमम्।
तत्रेयमस्य लोकस्य नाभविष्यच्छुभा गतिः॥

अस्यायं भावः—मनीषिभिः शास्त्रं चक्षुरिति प्रोक्तम्। श्रुतिस्मृत्यादिरूपचक्षुषा दृष्ट्वा यागादिकं क्रियते। यागादिकर्म श्रुतिस्मृत्यादिषु प्रोक्तम्। तत्र श्रुतिस्मृतिषु वर्णातिरिक्तं न किमपि वस्तुतत्त्वं विद्यते। वर्णानाञ्चोच्चारणानन्तरं स्थितिर्नोपलभ्यते। लिप्यात्मकस्वरूपाभावे उच्चार्यमाणवर्णानां क्षणावस्थायितया कतिपयकालानन्तरं श्रुतिस्मृत्युक्तवर्णानां विस्मरणाद् यागादिकर्मानुष्ठानस्यापि लोपापत्तिः स्यात्। अतो ब्रह्मा उच्चार्यमाणश्रुतिस्मृतिरूपचक्षुषोऽतिरिक्तमपरं लिखितं चक्षुर्निर्ममे।

यद्यपि भाषाभेदानुसारेण लिपिभेदो दृश्यते। तथाऽपि विभिन्नलिपिचिह्नैनैक एव वर्णः स्मर्यते। यथा—क-( देवनागरलिप्याम्) 'क' इत्येवम्, तेलगुलिप्याम् 'క' इति, ग्रन्थलिप्याम् 'H' इति, वङ्गलिप्याम् ''ch' इति। विभिन्नचिह्नैनैक एव वर्णः स्मर्यते, नान्यः। परन्तु कासुचिल्लिपिषु त्वेकेनैव चिह्नेन बहवो वर्णाः स्मर्यन्ते, तद्यथा आङ्ग्लभाषायाम् ' 'इति चिह्नेन केन्द्रार्थवाचकसेण्टर 'Center' शब्दे सकारस्य, छिदिरधात्वर्थके कट 'Cut' शब्दे च कवर्णस्य स्मृतिर्जायते।

लिपिं दृष्ट्वा सर्वे जना वर्णं स्मर्तुं न शक्नुवन्ति। किन्तु लिपिज्ञानवत्येव अक्षरस्मृतिर्जायते। यथा वृद्धव्यवहारेण घटादिशब्दानां कम्बुग्रीवादिरूपार्थेषु गृहीतशक्तिकस्यैव शाब्दबोधो जायते, नान्यस्य। तथैव रीत्या 'इयं लिपिरस्य वर्णस्य स्मृतिजनिका, इयञ्च अस्य वर्णस्य,' इत्येवं वृद्धव्यवहारेण गृहीतस्मृतिजनकशक्तिकस्यैव तत्तद्वर्णानां लिपिचिह्नस्य दर्शनेन तेषां स्मृतिर्जायते। अत एव देवनागर्यादिलिपिवृत्तिस्मृतिजनकशक्तिग्रहविहीनस्य लिपिं चक्षुषा पश्यतोऽपि वर्णस्मृतिर्न सम्भवति। वस्तुतस्त्विदं सर्वं जगद् शब्दस्य स्मृतिजनकं लिप्यात्मकं रूपमिव प्रतिभाति। कम्बुग्रीवादिमद्घटादिपदार्थं दृष्ट्वा 'घटः सुन्दरः, पटः कुरूपो विद्यते' इत्यादिवाक्यात्मकशब्दमुच्चारयितुमिच्छा जायते। परन्तु यथावयवसन्निविष्टाङ्गं जनं दृष्ट्वा, घटरूपं वा दर्शं दर्शं विभिन्नजनैर्विभिन्नवर्णाः समुच्चार्यन्ते न तु निश्चयरूपेणैक एव वर्णः, एक एव शब्दो वा उच्चार्यते। अतो लोकव्यवहारायाकारादिवर्णस्मृतिजनकस्यैतादृशचिह्नस्यावश्यकता जाता, यदेकेन चिह्नेनैकस्यैव वर्णस्योच्चारणं स्यात्, नान्यस्य। यथा 'क' इति चिह्नेन कवर्णस्य, 'ख' इति रेखया 'ख'वर्णस्य स्मृतिर्जायते। ऋगादिवेदमन्त्राणा-

मुदात्तादिस्वराणाञ्च सुरक्षणार्थं ब्रह्मा अकारादिवर्णानां स्मृतिजनकं लिखितं चक्षुर्निर्ममे, या ब्रह्मलिपिरित्यपरनाम्नाऽभिधीयते।

## लिपिपर्यायवाचिशब्दाः

लिखितम्, अक्षरविन्यासः, लिपिः, लिविः, अङ्कितम्, चिह्नम्, रेखाकृतिरित्येते शब्दा लिप्यर्थे प्रयुज्यन्ते। एतेषां मध्ये लिपिशब्दो लोकेऽतिशयेन लिखिताक्षरार्थे व्यवह्रियते। तत्राद्याः पर्यायवाचिशब्दा अमरकोषे निर्दिष्टाः समुपलभ्यन्ते। यथा—

लिखिताक्षरविन्यासे लिपिर्लिविरुभे स्त्रियाम्[1]।

लिख्यते स्म इति लिखितम्, न क्षरन्तीत्यक्षराणि, विन्यसनं विन्यासः, अक्षराणां विन्यासोऽक्षरविन्यासः। लिखितञ्च— अक्षरविन्यासश्च अनयोः समाहारे लिखिताक्षरविन्यासम्। तस्मिन्निति अक्षरविन्यासे। लिप्यते इति लिपिः, लिविः सौत्रौ धातुः, लिव्यते, इति लिविः, उभे स्त्रियौ स्याताम्। एवं लिखिताक्षरविन्यासलिपिलिविशब्दानां क्रमशो व्याख्यानं वेदितव्यम्। एतेषां मध्ये यद्यप्यक्षरविन्यासशब्दो लिप्यर्थे विद्यते तथापि केवलमक्षरशब्दोऽपि लिप्यर्थे दृश्यते। अक्षरशब्दस्य लिप्यर्थे विद्यमानादेव लेखकार्थे अक्षरचणशब्दः प्रयुज्यते। तथा चोक्तममरकोषे—"लिपिङ्करी लिपिकरोऽक्षरचणोऽक्षरचुञ्चुश्च[2] लेखके इति"।

अक्षरचणशब्दस्य 'अक्षरेण चणः वित्तः प्रतीतः' इत्यर्थे। "तेन वित्तश्चुञ्चुपचणपौ" इत्यनेन पाणिनीयसूत्रेण चणप्प्रत्ययेऽनुबन्धलोपे च अक्षरचणशब्दस्य निष्पत्तिर्जायते। यदि अक्षरचणशब्दे अक्षरपदेन वर्णानां ध्वन्यात्मकस्वरूपस्यैव ग्रहणं क्रियते, तर्हि 'उच्चरितवर्णेन वित्तः' इत्येव अक्षरचणशब्दस्य तात्पर्यं स्यात्, न तु 'लिखितवर्णेन वित्तः' इति तस्य स्वारस्यं संलभते। ततश्चामरकोषोक्तिर्व्यर्था स्यात्। अक्षरशब्देन लिखितवर्णस्वरूपग्रहणे तु लिपिकरार्थे अक्षरचणशब्दो युज्यते।

## चिह्नम्

लिपेरपरं नाम विद्यते चिह्नमिति। चाहयति चेद्यतेऽनेन वेति चिह्नम्। लिप्यर्थे चिह्नशब्दस्य प्रयोगो भर्तृहरिणा कृतः। यथा—

यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः।[3]

## अङ्कितम्

अङ्क्यते स्म इति अङ्कितम्। अङ्कितशब्दस्य चिह्नार्थे लिखितार्थे वा प्रयोगो वाल्मीकीयरामायणस्य सुन्दरकाण्डे समुपलभ्यते। यथा—

---

१. अमरसिंहकृतामरकोष; द्वितीयकाण्डम्, क्षत्रियवर्गः, श्लोकसं० १६।
२. अमरकोषः, द्वितीयकाण्डम्, क्षत्रियवर्गः, श्लोकसं० १५।
३. वाक्यपदीयम्, ब्र० का०, कारिका २०।

रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ।[१]

अस्मिंश्लोके रामनामाङ्कितं चेदमित्युक्तम् । रामनाम्ना अङ्कितम्, चिह्नितम्, लिखितं वेति तदर्थो वेदितव्यः । एवं लिप्यर्थे लिखितम्, अक्षरविन्यासः, लिपिः, लिविः, चिह्नम्, अङ्कितम् इत्येते शब्दा उपलभ्यन्ते । परन्त्वधुना लिपिशब्दाऽक्षरविन्यासार्थे प्रचुररूपेण बहुत्र प्रयुज्यते ।

'अस्या लिपिकलायाः कथं विकासः सञ्जातः' इत्यस्मिन् विषये बहूनि मतानि दृष्टिपथं समायान्ति । आधुनिकानामैतिह्यविदां मतानुसारेण लिपेर्विकासश्चित्रात् सञ्जातः । यथा सङ्गीतात्मकस्वरेण भाषणविधेर्यद्वा भाषाया ज्ञानं जातम्, एवं चित्रकलातो लेखनकलायाः प्रादुर्भावः सञ्जातः । चित्रात्मकलिपिप्रणाल्याम् एकेन चित्रेण सम्पूर्णवाक्यस्य बोधो जायते, न त्वेकवर्णस्य । शनैः शनैरनवधानतादिदोषवशात् चित्राणां समीचीनरूपेणाङ्कनाभावात् तेषु चित्रेषु विकृतिः समायाता । गोवत्सादिचित्राणां सुष्ठुरूपेण निर्माणे कर्तव्येऽशक्त्या यद्वा त्वरावशादपभ्रष्टचित्राणां निर्माणं प्रारब्धम् । कालक्रमानुसारेणैतेषामपभ्रष्टचित्राणामपि परिवर्तनं जातम् । एतेषां परिवर्तितरूपमेवैकाक्षरध्वन्युद्बोधकं चिह्नमदधात् । चीनजापानमिश्रादिदेशेषु या एकाक्षरबोधकशक्तिमती लिपिर्दृश्यते, तस्या मूलं चित्रमेव विद्यते । चीनदेशे चैकाक्षरबोधकलिपेर्विकासकालः (२०००) [२]सहस्रद्वयवर्षपूर्वं जातमित्येवमैतिहासिकविद्वांसो मन्यन्ते ।

एवमेव सर्वासां योरोपीयलिपीनामपि परम्परया चित्रादेव विकासः सञ्जातः । यतो हि यूरोपीयलिपीनां मूलं ग्रीकलिपिर्विद्यते[३] । थेराद्वीपे ग्रीकलिप्यां समुल्लिखितानां येषां वर्णानां समुपलब्धिर्जाता, तेषां लेखनकालं नवमशतीपर्यन्तमैतिह्यविद्वद्भिर्मन्यते । ग्रीकलिपिः सामीत्यपरनाम्नाऽप्यभिधीयते । सामीलिपेः स्वरूपमेकाक्षरात्मकमासीत् । तस्याश्च विकासश्चित्रादेवाभूत् । सामीलिपेः सुमेरीचित्रात्मकसङ्केताद् विकासस्य सत्वाद् 'ग्रीकलिपेश्चित्रादेव विकासः सञ्जातः' इति निश्चयेन वक्तुं युज्यते ।

यूरोपीयलिपीनां चित्रमूलकत्वे द्वितीयं प्रमाणम् एत्रुस्केननामा लेखो विद्यते । अयं लेखो रोमनदेशस्याभ्युदयात् पूर्वमिटलीभाषायां लिपिबद्धः कृतः । यस्यां लिप्यामयं लेखो विद्यते सा लिपिः एशियामाइनरस्थानाद् रोमदेशं प्राप्ता । एशियामाइनरलिपेर्मूलं चित्रमेवासीत् । कतिपयकालानन्तरम् एशियामाइनरलिपिरेव रोमनलिपिनाम्ना प्रसिद्धिमागता । एवञ्च रोमलिपेर्मूलभूता एशियामाइनरलिपिः[४], तस्याश्च चित्रमयत्वाद् रोमनलिपेरपि मूलस्वरूपं चित्रमयमेव विद्यते ।

---

१. वाल्मीकीयरामायणम्, सुन्दरकाण्डम्, सर्गः ३६, श्लोकसं० २ ।

२. प्रभुनारायणशर्मकृतभाषाविज्ञानतत्त्वेतिग्रन्थस्य—'लिपि के विकास का इतिहास' इति स्थले एतदीयोंऽशो द्रष्टव्यः ।

३. इतः पूर्वमुद्धृते ग्रन्थे—यूरोप की लिपियाँ इति स्थले द्रष्टव्यः ।

४. इतः पूर्वमुद्धृते ग्रन्थे 'यूरोप की लिपियाँ' इति स्थले द्रष्टव्यम् ।

एवं मिश्रचीन-एशियामाइनरेत्यादिसमस्तविश्वस्य लिपेर्मूलं सर्वैश्चित्रमेवाङ्गीक्रियते। किन्तु भारतवर्षे अकारादिध्वनेर्लिप्यात्मकस्वरूपस्य कदा कथञ्च विकासः सञ्जात इत्यस्मिन् विषये आधुनिकानामैतिह्यविदां विविधाः प्रवादाः श्रूयन्ते। तद्यथा—

[1]भारते वर्षे अकारादिवर्णानां लिप्यात्मकस्वरूपस्य नितरामभाव आसीत्। ऋगादिसर्वेषां वेदानाम् ऋषिसम्प्रदायेषु शिष्यपरम्परया मौखिकरूपेणाध्ययनमध्यापनञ्च व्यवह्रियमाणे आस्ताम्। ऋगादिसंहितास्थमन्त्राणां लिप्यात्मकस्वरूपाभावात्, गुरुमुखादेव श्रवणाद् वेदस्यापरं नाम श्रुतिरिति प्रसिद्धं जातम्। ऋगादिवेदानां प्रादुर्भावानन्तरं प्रचुरसमयेऽतिक्रान्ते सति १८०० अष्टशताधिकैकसहस्रम् ई० पूर्वं यदा भारते लेखनकलायाः प्रारम्भः सञ्जातः, तदा वैदिकमन्त्रा लिपिबद्धाः कृताः।

एवमकारादिवर्णानां भारतीयलिपिविषये विदुषामनेके प्रवादाः श्रूयन्ते। यत् किमपि तैरुच्यते, तत् सर्वमनुमानमात्रं प्रतीयते। वस्तुतस्तु लिपेः स्वरूपमासृष्टेर्विद्यते। यथा ऋगादिवेदानां प्राचीनत्वम्, तथा लिपेरपि। आधुनिकविबुधास्तु लिपेर्यं प्रारम्भकालं निश्चिन्वन्ति, ततोऽप्यतीव पूर्वमक्षरविलेखनस्य प्रारम्भः सञ्जातः। अयं विषयः प्रमाणपुरस्सरं क्रमशः प्रतिपाद्यते।

ऋग्वेदे 'अष्टकर्णी'शब्दस्य प्रयोगः कृतः। तत्प्रामाण्येन वैदिकयुगे लिपिकलाया अस्तित्वं स्पष्टतया प्रतीयते। तद्यथा—

इन्द्रेण युजा निःसृजन्तवाधतो व्रजं गोमन्तमश्विनम्।
सहस्रं मे ददतो अष्टकर्ण्यः श्रवोदेवेष्वक्रत ॥[2]

अस्मिन् मन्त्रे नाभानेदिष्टकृतस्य अष्टकर्णीनां गवां दानस्योल्लेखो दृश्यते। 'अष्टकर्ण्यः' इत्यस्य अष्टौ संख्या कर्णयोर्यासां ताः अष्टकर्ण्यः, न तु अष्टौ कर्णा यासां ताः अष्टकर्ण्यः इति विग्रहः, असम्भवात्। एतन्मन्त्रप्रामाण्येन मन्ये यत् पुरा बहुषु गोषु मध्ये 'मदीया का गौः, इयञ्च कस्य गोः, इयं गौर्मदीया वा अन्यस्य' इति भ्रमनिवारणाय गवां कर्णयोरक्षरेष्वङ्केषु च अष्टसंख्याः पञ्चसंख्या वा स्वस्तिकादीनां चिह्नानि वा लिख्यन्ते स्म।

यद्यप्यष्टकर्णीशब्दार्थविषये विदुषां मतभेदो दृश्यते। तद् यथा सायणाचार्यो व्याप्त्यर्थकाद् अशूधातोः क्तप्रत्ययं विधाय अष्टशब्दं निष्पाद्य व्याप्तकर्णा ( दीर्घकर्णाः ) इत्येवं भाष्यं कृतवान्। तन्मतेऽयमष्टकर्णीशब्दोऽन्येषामप्यङ्गानामुपलक्षणीभूतः। तथा च 'व्याप्तसर्वावयवाः' इत्यर्थे तस्य तात्पर्यम्। यस्या गोः पादविषाणादीनि दीर्घाणि, सा गौः

१. विद्वानों के मतानुसार वैदिकमन्त्र पहिले मौखिक रूप में जीवित थे। श्रुति नाम उनका एतदर्थ ही पड़ा। उसके बाद १८०० ई० पूर्व भारत में लेखन कला का जन्म होने के कारण वैदिकमन्त्र लिपिबद्ध होने लगे। 'श्रीवाचस्पति गैरोला–संस्कृत साहित्य का संक्षिप्त इतिहास' इत्याख्ये ग्रन्थे 'ऋग्वेद का निर्माण' इति स्थलं द्रष्टव्यम्।

२. ऋग्वेदः, १०।६२।७।

अष्टकर्णी उच्यते । [1]ग्रासमानमहोदयस्तु अष्टशब्दस्य संख्यार्थमङ्गीकृत्य अङ्केषु अष्टसंख्यया अङ्कितकर्णा गौरित्यर्थं मन्यते स्म । [2]कश्चिच्च छिन्नभिन्नकर्णास्तदर्थमङ्गीकृतवान् । एष्वर्थेषु "सायणाचार्यस्वीकृतः व्याप्तकर्णाः, अथ च अङ्केष्वष्टसंख्यया अङ्कितौ कर्णौ यासां ताः अष्टकर्ण्यः" इत्यर्थद्वयमेव शब्दशास्त्रदृष्ट्या युक्तं प्रतिभाति । अत्र च ग्रासमानमहोदयस्यापि सुदृढो विश्वासः । अर्थद्वये निश्चिते सति "इन्द्रेण युजा ..........." इति ऋग्वेदीये मन्त्रे "कोऽर्थो ग्रहीतव्यः" इत्यत्र विनिगमनाविरहाद् अष्टकर्णीशब्दो वैदिकयुगे लिपेरस्तित्वस्वीकारे प्रमाणतां नावहति, तथापि मैत्रायणीयसंहिताप्रामाण्यबलेनाङ्केषु अष्टसंख्यया चिह्नितस्य कर्णस्यैव ग्रहणं बोद्धव्यम् । अस्यां संहितायाम्[3] "कर्करिकर्ण्यः, दात्रकर्ण्यः, छिद्रकर्ण्यः" इत्येव गवां विशेषणानि समुपलभ्यन्ते । गवां कर्णयोश्चिह्नाङ्कनप्रथायाः समुपलाभान् मन्ये अष्टकर्णीपदघटकः अष्टशब्दः अङ्केष्वङ्कितस्य संख्याविशेषस्य, यद्वा तत्सदृशस्य चिह्नस्य बोधकः । यद्वा भवतु नाम अष्टकर्णीशब्दघटकस्य अष्टशब्दस्य अर्थविषये वैमत्यम् । सायणाचार्यः अष्टशब्दः संख्याया अपि वाचकोऽस्तीति न जानाति स्म इति न, परन्तु मैत्रायणीयसंहितायां व्यवहृतानि कर्करिकर्ण्यादिपदानि वैदिकयुगे लेखनकलायाः प्रामाण्यमावहन्ति। ऐतिहासिकदृष्ट्या संहिताकालः प्राचीनतमो गण्यते ।

वैदिकयुगे लिपेरस्तित्वस्वीकारेऽपरञ्च प्रमाणं श्रीदाशरथिरामस्य वैदिकयुगीयत्वरूपं विद्यते । केषाञ्चिद् विदुषां मतानुसारेण दशरथसूनुः श्रीरामो वैदिकयुगे प्रादुर्बभूव[4] । ऋग्वेदस्य दशममण्डले श्रीदाशरथे रामस्य चर्चा दृश्यते । अत्र प्रमाणमधस्तादङ्कितम्—

प्रतद्दुःशीमे पृथवाने वेने प्ररामे वोचमसुरे मघवत्सु ।
ये युक्त्वाय पञ्चशतास्मद्युः पथा विश्राव्येषाम् ॥

प्रमाणरूपेणात्रोद्ध्रियमाणमन्त्रस्य भाष्यं सायणाचार्यो निम्नोक्तप्रकारेण कृतवान्—

'ये देवाः पञ्चशतानि रथानि युक्त्वाय अश्वैर्युक्त्वा अस्मद् युः अस्मत्कामाः सन्तः यथा यज्ञमार्गिणो गच्छन्ति, तेषामेषां देवानां विश्रावि । देवानां लोके वा विशेषेण

---

१-२. मूललेखक ए० ए० मैकडोनेलः एम० ए० पी-एच्० डी० । तथा ए० बी० कीथ एम० ए० डी० सी० एल० बी०, अनुवादको रामकुमाररायः 'वैदिक इण्डेक्स' इति ग्रन्थे एतदीयोंऽशो द्रष्टव्यः ।

३. ४।२।९ ।

४. ऐसी भी परम्परागत श्रुतियाँ हैं कि वेदों की रचना के बाद 'रामायण' की रचना हुई और उसकी कलेवरवृद्धि के लिये लगभग ५०० ई० पूर्व तक उसमें अनेक क्षेपक जुड़ते गये । विद्वानों की एक परम्परा राम और वाल्मीकि को समकालीन मानने के पक्ष में है । **श्रीचिन्तामणिविनायक वैद्य का मत है कि ऋग्वेद के दशवें मण्डल में, जिसमें राम का उल्लेख हुआ है उसका नायक कोई दूसरा नहीं था, दाशरथी राम ही थे** । वाचस्पति गैरोला—संस्कृत-साहित्य का संक्षिप्त इतिहास, पृ० १५९ । अत्र रेखाङ्कितवाक्येन मूलोक्तस्य पुष्टिर्जायते ।

श्रावकगुणयुक्तं तत्स्तोत्रं दुःशीमे दुःशीमनाम्नि पृथवाने पृथवानः पृथिः तस्मिन् वेने च असुरे बलवति रामे च एतेषु राजसु प्रवोचं प्रब्रवीमि प्रख्यापयामीत्यर्थः ।'

अत्र भाष्ये दुःशीमेत्यादिव्यक्तिचतुष्टयस्य कृते राजशब्दो विशेषणतया प्रायुज्यत । त्रयो रामाः प्रसिद्धाः सन्ति । ते यथा—परशुरामः, दाशरथी रामः, बलरामः । एतेषां मध्ये श्रीदाशरथी राम एव राजा बभूव; नान्यः । तेनात्र मन्ये तस्यैव ग्रहणं वेदितव्यम् । श्रीदाशरथिरामस्य वैदिकत्वेऽकारादिध्वनीनां रेखालिप्यात्मकस्वरूपमपि वैदिककालिकं निश्चप्रचं जातम् । यतो ह्ययं भगवान् श्रीरामः स्वनामाङ्कितमुद्रां दधाति स्म । तथा चोक्तं वाल्मीकीयरामायणे—

'रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ।'[१]

किं बहुव्याहारेण, ऋगादिवेदेष्वेवंभूता अपि पदार्था दृष्टिपथं समायान्ति, येषां वैदिककालानन्तरं प्रादुर्भावः, परन्तु तेऽपि वैदिककालिकसत्तावन्तो दृश्यन्ते । तद्यथा— 'इमं मे गङ्गे यमुने शुतुद्रि'[२] ।

एवं पवित्रतमानां गङ्गादिनदीनां वैदिकयुगत्वे 'प्रतद्दुःशीमे०' इति मन्त्रे श्रीरामस्योल्लेखात् तस्य वैदिकयुगीयत्वस्वीकारे न कापि क्षतिः । [३]स्वनामाङ्कितमुद्राधारणस्योल्लेखाच्च लिपेरस्तित्वं वैदिककालत एव स्वीकर्तुमापतति । अत्र विषयेऽपरञ्च प्रमाणमथर्ववेदीय एको मन्त्रो दृष्टिपथं समायाति । स च मन्त्रो यथा—

यद्वो मुद्रं पितरः सोम्यञ्च तेनो सचध्वम्, स्वयशसो हि भूतम् ।[४]

'हे पितरः ! यत् सोम्यं सोमयागं कर्तुं योग्यं ( पवित्रमित्यर्थः ) मुद्रं धनं विद्यते, तादृग् धनमस्मभ्यं प्रयच्छत, न तु अन्यायसमर्जितमशुद्धं मुद्रम् = मुद्राम् = धनं वा' इति पूर्वार्द्धमन्त्रस्य तात्पर्यं विद्यते । अस्मिन् मन्त्रे 'मुद्रं' पदं वैदिकयुगे लिपेरस्तित्वं प्रमाणीकरोति । मुदं हर्षं रातीतिविग्रहे मुदकर्मकराधातोः 'आतोऽनुपसर्गे कः'[५] इति कप्रत्ययेऽनुबन्धलोपे 'आतो लोप इटि च'[६] इति राधातुघटकस्याकारस्य लोपे सति 'मुद्र' इति स्थिते 'छन्दसि सर्वे विधयो विकल्प्यन्ते' इति नियमानुसारेण टावनुपपत्तौ च मुद्रमिति रूपम्, टाप्प्रत्यये च 'मुद्रा' इति रूपं संसिध्यते । इदञ्च मुद्रपदं ( मुद्रापदम् ) वैदिकयुगे कथं प्रमाणमिति ज्ञानात् पूर्वं मुद्रापदस्य रूप्यकार्थे ( धनार्थे ) अद्यापि वैदिकयुगवत् प्रयोगः क्रियते । तत्कथमिति ज्ञानमावश्यकं विद्यते । मुद्राशब्दस्य अपभ्रंशः 'मुहर' इति शब्दोऽधुना बहुशः प्रयुज्यते । अपभ्रंशमुहरशब्दवाच्यार्थरूपे काष्ठादिफलके रेजर्ववेङ्काध्यक्षस्य पदसङ्केत-

---

१. वाल्मीकीयरामायणे सुन्दरकाण्डे, ३६।२ ।

२. ऋग्वेदः, १०।७५।५ ।

३. मुद्राशब्दोऽङ्गुलीयकस्य पर्यायवाची श्रीमदमरसिंहविरचितेऽमरकोषे द्वितीयकाण्डे मनुष्यवर्गे १०८ तमे श्लोके एतदीयोंऽशो द्रष्टव्यः ।

४. अथर्ववेदः, १८।३।१९ ।

५. ६. पाणिनीयं सूत्रम् ।

सहितानि नामाक्षराण्यङ्कितानि भवन्ति। कर्गलपत्रनिर्मितं चतुष्कोणात्मकं यद्वा वृत्ताकारात्मकं धातुनिर्मितं यद् रूप्यकं दृश्यते, तद् रेजर्ववैङ्काध्यक्षनामाङ्कितमुद्रया, अपि च राष्ट्रचिह्नेन ( अशोकस्तम्भेन ) चिह्नितं भवति। अतो रेजर्ववैङ्काध्यक्षनामाङ्कितमुद्रया रूप्यकमपि ( धनं द्रव्यं वा ) मुद्रापदेन व्यवह्रियते।

मुद्राया इयं प्रथा नाधुनिकी, अपि त्वस्याः प्रथायाः परम्परा अविच्छिन्नरूपेण वैदिकयुगादेव प्रचाल्यमाना विद्यते। 'यद्वो मुद्रं पितरः' इत्यथर्ववेदीयमन्त्रे धनार्थे ( रूप्यकार्थे, द्रव्यार्थे वा ) मुद्रमिति पदस्य प्रयोगाद् ज्ञायते यत् पुरा ( वैदिकयुगे ) राष्ट्रशासका राजान आदानप्रदानव्यवहारे सौविध्यर्थं स्वनामाक्षराङ्कितमुद्रया अर्धवालिस्तमात्रं यद्वा ततोऽपि न्यूनं चतुष्कोणात्मकं भूर्जादिपत्रं चिह्नितं कृत्वा धनरूपेण व्यवहर्तुमाज्ञापयाञ्चक्रुः। यतो हि यो मया व्यवहारः क्रियते, स केनापि शिक्षितः, येन शिक्षितस्तस्यापि कश्चिद् शिक्षक इति रीत्या सर्वोऽपि व्यवहारः परम्परामूलः। तदित्थं राजनामाक्षराङ्कितमुद्रायाः प्रामाण्यवलेन वैदिकयुगे लिपेरस्तित्वं विश्वासपदवीमाटीकते। वैदिकयुगीयापेक्षया अद्यतनमुद्राया ( मुहरपदार्थस्य ) स्वरूपे वैलक्षण्यं स्यादिति त्वन्यत्, परन्तु वैदिकयुगेऽपि राजनामाङ्कितमुद्रायाः प्रचलनमासीत्। एवं भाषाविज्ञानदृष्ट्या, आधुनिकैतिह्यविदां मतानुसारेण च लिपिकलायाः प्रादुर्भावो विकासश्च निरूप्य वैदिकमन्त्रदृशा तत्र विचारः समुपस्थापितः। भौतिकध्वनिशास्त्रदृशा त्वकारादिध्वनेश्चिह्नं विलक्षणं विद्यते।

वस्तुतस्त्वकारादिध्वनीनां लिप्यात्मकं यद्वा चित्रात्मकं स्वरूपं भौतिकशास्त्रं विना निर्णेतुं दुरूहम्। भाषावैज्ञानिकैर्ध्वनीनां यल्लिप्यात्मकं स्वरूपं प्रतिपाद्यते, तत्तु देशस्य भाषायाश्च भेदानुसारेण विभिन्नरूपत्वादवैज्ञानिकम्। यथा अकारो देवभाषायाम् 'अ, अ' इत्येवम्, आंग्लभाषायां रोमनलिप्याम् 'A' इत्येवं रेखया अङ्कीक्रियते। एवञ्चात्रैकस्यैवाकारस्य भिन्नं लिप्यात्मकं स्वरूपं दृश्यते। भाषाविज्ञानं खल्वकारादिध्वनिभिः सामान्यं मानवेषु व्यवहृतञ्च रेखाङ्कितं स्वरूपं व्याख्याति, रासायनिको यद्वा भौतिक इव ध्वनेश्चित्राङ्कनकार्यं कर्तुमक्षमम्। वैज्ञानिकं वास्तविकञ्च ध्वनेश्चित्रमेतद्भिन्नम्। ध्वनीनां यथार्थस्वरूपं ज्ञातुं मानवीयबुद्धिहृदयादितत्त्वस्य, अथ च भौतिकशास्त्रस्य ज्ञानमपेक्षितम्।

सर्वत्र देशे यस्याङ्कनमुच्चारणञ्च समाने, तदेव वैज्ञानिकं भौतिकशास्त्रसमन्वितञ्च ध्वनेश्चिह्नं ( लिपिः ) चित्रं वा स्वीकर्तव्यम्। यथाऽस्माकं मूर्तिश्चित्रपटे क्रियते, तच्छायाचित्रं दृष्ट्वा उच्यते 'अयं देवदत्तः, अयं यज्ञदत्तः' इति। तथैव रीत्या ध्वनेरपि मूर्तिर्ध्वन्यभिलेखनादियन्त्रेषु[1] यान्त्रिकक्रियया निष्पाद्यते, तदेव च ध्वनेर्वास्तविकं रेखयाङ्कितं स्वरूपम्। वक्तुर्मुखान्निःसृता ध्वनयो ध्वन्यभिलेखनयन्त्रस्य परिवृत्तात्मके [2]मण्डलके लिपि-

1. In to the phonograph.
2. In to the plate of a phonograph.

रूपेण स्थायिनः[१] क्रियन्ते। ध्वन्यभिलेखनयन्त्रस्थतनुपटसंश्लिष्टा एका सूचिका तीक्ष्णाग्रभागेन मण्डलकं संस्पृशति। ध्वन्यभिलेखनक्षणे मण्डलकं शनैः शनैः परितो भ्राम्यति। यदा ध्वन्यभिलेखनयन्त्रस्थस्य तनुपटस्य पुरःसरसि गायकेन यदा वक्त्रा गीतं वाद्यं वा गीयते, समुच्चार्यते च, तदा तनुपटोऽपि ध्वन्यनुरूपं परिस्पन्दं कुरुते। ततस्तत्संश्लिष्टसूचिकाऽपि ध्वन्यनुरूपपरिस्पन्दिततनुपटस्पन्दनानुरूपं क्षुभ्यमाणा परिभ्राम्यमाणे मण्डलके ध्वन्यनुरूपमुच्चावचं वक्राकृतिकगर्तक्रमेण रेखया निर्माति। तदेव ध्वनेर्वास्तविकं रेखयाऽङ्कितं स्वरूपम्। 'ध्वनेः आकृतिः, तस्य वक्त्रता वा कीदृशी ?' इत्येतज्ज्ञानं ध्वनिवक्रताङ्कन-[२] यन्त्रेण कर्तुं शक्यते, नान्यथा। उच्चार्यमाणा अकारादिध्वनयो लोहादिफलकानामुपरि पतितेषु रजःकणेषु सिकतासु, द्रवीभूतेषु जतुषु च स्वानुरूपं चित्रं निर्मान्ति।

एवमुपर्युक्तं रेखयाङ्कितं ध्वनेः स्वरूपं यथार्थं प्रतिभाति। अस्माकं हृदः समुद्भूता विचारा वायौ स्वानुरूपामाकृतिं रङ्गञ्च समुत्पादयन्ति। एतच्च वैज्ञानिकैः सुष्ठुरूपेण परीक्षितम्[३]। यद्येवमस्ति तर्हि विचार्यमाणानां चिन्तनविषयीभूतानामकारादिध्वनीनामपि वायौ रूपं रङ्गञ्च समुत्पद्येते। किं बहुना, यदाऽस्माकं बुद्धिः चिन्तनशीला, तदा मस्तके बुद्धिकेन्द्रे विद्युत् समुत्पद्यते। तया विद्युता च द्रवीभूते जतुज इव बुद्धिकेन्द्रे यद्वा बुद्ध्यवच्छिन्नाकाशे समेषां विचाराणामाकृतिरप्यङ्किता भवति। यद्येवं तर्ह्यकारादिध्वनीनां विषयेऽपि सा क्रिया भवति।

अकारादिध्वन्यनुरूपा आकृतिर्बुद्धिकेन्द्रे ध्वन्यनुरूपा आकृतिर्बुद्धिकेन्द्रे ध्वन्यभिलेखनयन्त्र इव अवश्यमेव विलिख्यते। एतच्च तथ्यमस्माकं तन्त्रशास्त्रमपि पोषयति।

---

1. Recorded.
२. गिलर ने फोनोडाइक नामक एक यन्त्र बनाया, जिससे ध्वनिवक्त्र खींचा जाता है। श्रीललितकिशोर सिंह—ध्वनिविज्ञान, पृ० १८५।
३. जब हम विचार करते हैं, तब वायु में आकार और रङ्ग उत्पन्न होते हैं। उन विचारों को हमारे स्थूल नेत्र नहीं देख सकते। पेरिस के डाक्टर बेरडुक ने विचारों से वायु में जो चित्र बनते हैं, उनके फोटो लिये हैं। ले० स्वामीज्ञानाश्रमः, प्रकाशकः डॉ० बालकृष्णनागरः 'सङ्कल्पसिद्धिः' पृ० ४७।

विचारों का असर केवल फोटो प्लेट पर ही चित्र बनाना मात्र नहीं है, किन्तु विज्ञान से यह भी ज्ञात हुआ है कि विचार के समय विद्युत् उत्पन्न होती है और उसका असर भी मिकनातीसी सुई द्वारा नापा गया है। जहाँ बिजली होती है, वहां आकाश के परमाणुओं में कम्पन होता है। इससे संकल्प द्वारा प्रत्येक मनुष्य आकाश में परमाणुओं की गति को बदल देता है। परमाणुओं की गति पलटने से आकाश में रूप बनते हैं। 'अयमंशः 'सङ्कल्पसिद्धिः' इति पूर्वोक्ते ग्रन्थे द्रष्टव्यः।

मूलाधाराद् आब्रह्मविलं विलसन्ती विसतन्तुतनीयसी विद्युत् पुञ्जपिञ्जरा विद्यते[१]। विवक्षायां सत्यां तया विद्युता द्रवीभूता अमृतधारा सौषुम्णाध्वना यदा शिरसि निपतति, तदा सा अमृतधारा एव ध्वन्यनुरूपां लिपिमयीमाकृतिं दधाति। ध्वन्यनुरूपां ताञ्च लिपिम् ऋषयो ज्ञानचक्षुषा दृष्टवन्तः। ऋषीणामतीन्द्रियं यज्ज्ञानम्, तदस्माकं प्रत्यक्षमिव। तच्च ज्ञानं किमपि प्रमाणं प्रबाधितुं न शक्नोति। कण्ठताल्वादिस्थानेषु अकारादिध्वन्यनुरूपा रेखाकृतयो विद्यन्ते। ताश्च वर्णानां रेखाकृतयोऽमृतधारया निर्मिताः। तात्पर्यदीपिकायां कामधेनुतन्त्रे[२] च अयं विषयः पुष्कलरूपेण प्रतिपादितः। यथा अकारस्याकृतिः पञ्चकोणात्मिका, ककारस्य च कुण्डलीत्रयसंयुता। यथा ध्वनिविलेखनयन्त्रे ध्वनयो विलिख्यन्ते, तथैव ताल्वादिस्थानस्योर्ध्वपटले तेषामङ्कनं जायते। मानवकृतानि ध्वन्यभिविलेखनयन्त्राणि ईश्वरप्रणीतहृदयमस्तिष्कमुखादियन्त्रानुकृतिकान्येव तत्र निर्मिता लिपिरेव ध्वन्यनुरूपा। सा च लिपिरस्माकं चित्रमिव ध्वनीनामाकृतिं तदनुरूपतया व्यक्तीकरोति।

अत्र संक्षेपत एवं बोद्धव्यम्। मुखान्निःसृता ध्वनयोऽन्तःकरणाद् बहिर्देशे त्रिविधं रेखयाङ्कितं स्वरूपं निर्मान्ति। तद्यथा—

(१) घटपटादयो ध्वनयो यादृशं घटपटादिकं मनसि निधाय प्रोच्चरितास्तादृशं कम्बुग्रीवादिविशिष्टं घटपटाद्यात्मकं चित्रं वायौ यद्वा काष्ठादिफलकेषु निर्मान्ति। वायौ ध्वनिभिरेतादृशं यच्चित्रं निर्मीयते, तदस्माकं चक्षुषा न प्रत्यक्षीक्रियते, तादृशचित्रस्यातीव सूक्ष्मत्वात्। काष्ठादिफलकेषु च घटपटादिध्वनिभिस्तत्तदाकारं यच्चित्रं निर्मीयते, तत्तु चक्षुरिन्द्रियविषयार्हम्। परन्तु साधनद्वारा शब्दं तन्निष्ठां शक्तिञ्च साधुतया ये समुपासितवन्तः, तेषामेव घटपटादिध्वनिषु तादृशी शक्तिर्विद्यते, नान्येषाम्। एतादृशी शक्तिरांशिकरूपेणाद्यतनेऽपि काले केषाञ्चिद् ध्वनिषु [३]दृष्टा।

---

१. आधारादिषट्कमलदलेषु पातिता द्वादशान्तस्थितचन्द्रमण्डलात् सृता अमृतबिन्दवोऽकारादिक्षकारान्तवर्णात्मना परिणताः। उक्तं ह्याचार्येण—

मूलाधारात् स्फुरिततडिदाभा प्रभा सूक्ष्मरूपो-
........................................।
........................................
ध्याता सद्योऽमृतमथ रवः स्रावयेत् सार्धसोमात्॥
शिरसि निपतिता या बिन्दुधारा सुधायाः
भवति लिपिमयी सा याभिरङ्गं मुखाद्यम्॥ (तात्पर्यदीपिका)

२. शृणु तत्त्वमकारस्य अति गोप्यं वरानने।
शरच्चन्द्रप्रतीकाशं पञ्चकोणमयं सदा॥ (कामधेनुतन्त्रम्।)

३. 'वायस फिगर्ज' पुस्तक की लेखिका मिस वट्सह्यूज ने शब्द के विज्ञान का चमत्कार क्रियात्मक रूप से लन्दन के लार्ड लिटनशिल्प में दिखाया था। वह अपने बनाये संगीत यन्त्र 'इडोफोन' विधिपूर्वक बजाती थी, जिससे अनेकों प्रकार के रूप बन जाते थे। एक बार उसने डेजी नामक

( २ ) द्वितीयं रेखयाङ्कितं स्वरूपं सन्देशाङ्कनयन्त्रेषु दृश्यते। अस्मिन् यन्त्रे रोमनलिप्यां ध्वनय अङ्किता भवन्ति। यदा युष्मद् अस्मदाद्यर्थकाः 'आई यू' इत्यादयो ध्वनयः समुच्चार्यन्ते, तदा ते ध्वनयो यन्त्रस्य तद्देशं स्वतरङ्गशक्त्या अभिहतं कुर्वन्ति, यत्र ते रोमनलिप्यामङ्किता भवन्ति। 'आई = अहम्, यू = त्वम्' इत्यादिध्वनितरङ्गशक्त्या अभिहतो यन्त्रस्य सभागः कर्गलपत्रेषु तं ध्वनिं मसिद्वारा अङ्कितं करोति।

( ३ ) ध्वनिविलेखनयन्त्रस्य मण्डलके ध्वनयो रेखाङ्कीक्रियन्ते। अस्य व्याख्यानमितः पूर्वं कृतम्। अतो नास्त्यस्य व्याख्यावसरः।

अपरा च ध्वन्यनुरूपा आकृतिः अमृतधारया बुद्धिकेन्द्रे ध्वन्यभिलेखनयन्त्र इव विलिख्यते। अस्यापि विवरणं पूर्वं सम्पादितम्।

एषु रेखयाऽङ्कितेषु स्वरूपेषु ध्वनिविलेखनयन्त्रस्य मण्डलके, बुद्धिकेन्द्रे च अकारादि-ध्वनेर्यदङ्कनम्, तदेव ध्वन्यनुरूपम्। तत्कथं ध्वन्यनुरूपम्, अन्यच्च कथं न स्वीक्रियते ? इत्येतत् सर्वं पूर्वमेव ध्वनिविलेखनयन्त्राङ्कितस्य, अथ चामृतधारयाऽङ्कितस्य स्वरूपस्य प्रतिपादनावसरे व्याख्यातम्। साधनद्वारा शब्दं तन्निष्ठां शक्तिञ्च समुपासितवद्भिः प्रोच्चारितैर्घटपटादिध्वनिभिः चित्रफलके यद् घटपटाद्यात्मकं चित्रमङ्कीक्रियते, तदपि ध्वन्यनुरूपतां नावहति। तच्चित्रं दर्शं दर्शं 'घटस्य चित्रं सुन्दरम्, अयं घटः' इत्येव-मनेकवाक्यात्मकस्य ध्वनेः स्मरणात्, न तु 'घटः पटः' इति ध्वनिद्वयस्य। ध्वनिविलेखन-यन्त्रे त्वेकेन ध्वनिचिह्नेन सर्वत्र देशे सर्वस्मिन् काले एक एव ध्वनिरभिव्यज्यते। इति शम्।

---

सुन्दर पुष्प की आकृति बनायी और उसकी व्याख्या भी की कि संगीत यन्त्र को किस विधि से बजाने से ऐसा हुआ।

फ्रान्स की एक महिला विद्यार्थी　　ने कालभैरवाष्टक स्तोत्र का गान किया। इससे एक भयंकर मूर्ति और कुत्ते की रेखायें अंकित हो गयी।' तन्त्र-महाविज्ञान, पृ० ४५६ ( लेखक—पं० श्रीराम शर्मा आचार्य, तथा डा० चमनलाल गौतम )।

# प्राचीनभारते दासप्रथा

डॉ० हरिहरनाथत्रिपाठी

व्याख्याता—राजनीतिशास्त्रविभागः, का० हि० वि० वि०

अल्वेट्वाय-महोदयैर्दक्षिणभारते चिरमुषितम्। एतेषां मतं यत् सामन्तानां मठाधीशानां वणिजां च गृहेषु दासकार्यं कुर्वन्तो दासा एकोनविंशतिशताब्दीं यावल्लभ्यन्ते। ईस्टइण्डियाकम्पनी इत्येतन्नियमानुसारं डॉ० होमिल्टनमहोदयेनैतदेव सर्वेक्षणे कृते स्वीकृतम्।[1] अनेकैरत्राङ्ग्लदेशीयैरधिकारिभिरेतद्विषयका ग्रन्था लिखिताः[2]। कोलब्रुकमहोदयेन त्वेष प्रश्नो ब्रिटिशसंसद्यप्युत्थापित आसीत्[3]। अस्मिन्नन्वेषणे आन्दोलने चैतद्विषयकाणि बहूनि प्रमाणानि प्रास्तूयन्त यद् दासप्रथा चिरकालत एव व्यवहारक्षेत्रे पदं निहितवत्यस्ति। वंगभाषायां मैथिलभाषायाञ्चोपलब्धानि दासपत्राण्यपि प्रस्तुतान्यभूवन्, यानि दासानां विक्रयस्य लिखितान्यासन्। यूनानीलेखकैस्तु दासप्रथायाः प्राचीनता समर्थितैव। मनुस्मृतिमाश्रित्यैव वाँलनमहोदयेनापि भारतवर्षे तादृशी एव दासता स्वीकृता, यादृशी युरोपीयदेशेषु प्रचलिता आसीत्। तन्मतानुसारं शूद्रा दासाश्चैक एव। एकोनविंशतिशताब्द्या अन्तिमे चरणे लेटुर्नीमहोदयेन विभिन्नानामादिवासिनामध्ययनेनैष एव निष्कर्षः स्थापितः। नेबूर अनेन लेटुर्नी एवानुकृतः[4]। एकोनविंशतिशताब्द्या अन्तिमे चरणे विषयाध्ययनेन सह समाजशास्त्रीयपक्षोऽपि योजितुमारब्धः। आर० फिकेनमहोदयेन दासता समाजघटकानां सन्दर्भे स्वीकृता यत् प्रत्येकं भूस्वामी वणिक् च दासानां स्कन्धे एव निर्भरः[5]।

---

1. F. H. Buchanan (i) An Account of the District of Purnea.
   (ii) An Account of Bhagalpur .
   (iii) An Account of Bihar and Patna.
   (iv) Journal of Dr. Buchanan......Bhagalpur.
   (v) Journey Through Mysore Fanara and Malabar, Vols. I and II.

   M. Martin, History of Eastern India, Vols. II and III.
2. Parliamentary Process in British India, London, 1834.
3. Encyclopaedia of India and of Eastern and Southern Asia of Balfoure, Vol. III, p. 672.
4. H. J. Niectoer, Slavery as an Industrial System.
5. R. Fick, The Social Organisation in N. E. India.

रिज़डेविड्समहोदयस्य विचार उपर्युक्तानां विदुषां पक्षं नानुवर्तते[१]। स दासतां नैव मन्यते। एतदपि न मन्यते यत् पाश्चात्त्यैः कृषकाणां यादृशं वर्णनं कृतमस्ति तदप्यतिशयोक्तिपूर्णमेव[२]। वस्तुतः पाश्चात्त्यैर्विद्वद्भिर्गृहभृत्या एव दासाः स्वीकृताः। अत्र विषये उभावपि पक्षौ स्तः[3]। कौटल्येन' न ह्यार्यस्य दासभावः' इति स्पष्टं घोषणा कृता। तदानींतनेन मेगस्थनीजेनापि लिखितं यद् भारतीया दासान् नाधिकुर्वन्ति स्म। पाश्चात्त्यैर्विद्वद्भिर्यद्दासता समर्थिता अस्ति, तैस्त्रिपिटक-जातक इत्यादिबौद्धसाहित्यकथा मूलतया आश्रिताः। श्रीपाद-डाङ्गे डी० डी० कौशाम्बी इत्यादिभिः एंजेल्ससूत्राणि भारतीयसाहित्ये चरितार्थयद्भिर्महत् प्रयतितम्। फलत एतस्य मतमेकदेशीयं भवति[४]। भारतीयविदुषाम् मध्ययनमपि प्रायेण पाश्चात्त्यदृष्टिकोणेन पाश्चात्त्यवासनया प्रभावितमस्ति[५]। इदं तथ्यं यद् विश्वस्यानेकेषु प्राचीनेषु समाजेषु दासप्रथा आसीत्, किन्तु साम्राज्यवादः, यो यूरोपीय-दासतारूपेण विकसितोऽभूत्, सर्वथा सोऽमान्य आसीत्। डॉ० आर० के० मुखर्जीमहोदयेन दास इत्येष उपाधिः स्वीकृतः। याज्ञवल्क्य-कुमारिलभट्टप्रभृतिभ्यो महापुरुषेभ्यः दासाः दत्ता इति वर्णनं लभ्यते[६]। एतेन स्पष्टं यत् ते दासाः सेवका आसन्, अन्यथा एतेषां कृते दासानां का आवश्यकता आसीत्!

ऋग्वेदे आर्याणां दासानाञ्च विभाजनार्थमिन्द्रः प्रार्थितोऽस्ति[७]। दस्यवो दासाश्चैक एव स्वीक्रियन्ते[८]। एकस्यामेव ऋचि दस्युशब्दो दासशब्दश्च दृश्येते। एतेषां दस्युदासानां

1. Budhist India, p. 63.
2. तदेव; Cambridge History of India, Vol. I.
3. S. N. Basu, Slavery in the Jātakas, JBRS, Vol. IX, pp. 369—375f.
   L. Sarup, Some Aspects of Slavery, Journal of Punjab Historical Society, Vol. VIII, pp. 174-84. N. C. Benerjee, EconomicLife in Anclent India, Vol I, p. 27.
   Shavery in Ancient India, Calcutta Review, August, 1930, pp. 247–69.
   R. L. Mehta, Pre-Budhist India.
   A. N. Bose, Origin of Slavery in Indo-Aryan Economy, JIH, August, 1940
   U. N. Ghoshal, The Beginning of Indian Historiography, p. 36.
4. Wetstermarck, Origin and Developmens of the Moral Ideas, Vol. I.
5. Encyclopaedia of Social Sciences, Vol. XIV, p. 74.
6. Dev Raj Chanana, Slavery in Ancient India, p. 7.
७. ऋग्वेद० २।५१।८।; २।१०३।३।; १।११७।२१।; २।११।२,४,१८.१९।; ३।२९।९।; ५।७०।३।; ७।५।६।; ९।८८।४।; ३।१८।३।; ३।१५।२।;
८. अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः।
   त्वं तस्यामित्रहन् वधर्दासस्य दम्भय॥ ऋग्वेद १०।२२।८।

साम्ये अकर्मता; अन्यव्रतता अमानुषता च मूलम्। येनोभयेऽप्यार्याणां समानाः शत्रव आसन्[1]। अन्यत्र इन्द्रः समानरूपेण दासान् दस्यूंश्च निहन्तीत्यपि वर्णितम्[2]। दस्यूनां कृते 'अयज्ञः' 'अव्रतः' 'मृध्रवाक्' 'अनासः' इत्येतानि विशेषणानि यथा प्रयुक्तानि सन्ति, तेन ज्ञायते यद् दस्यूनां स्वतन्त्रं सामाजिकमहत्त्वमासीत्। ते वैदिकसामाजिकान्यतावहिर्भूता आसन्। तेऽसुरा अपि कथिताः[3]। शम्बरः ऋग्वेदे 'दासः' इति 'दस्युः' इति च कथितः[4]। तैत्तिरीयसंहितायां यावदीदृशः प्रयोगः प्रचलति[5]। दासानामार्याणां च पारस्परिकं शत्रुत्वं सुस्पष्टमस्ति[7]। एतेन विवेचितेन स्पष्टं यद् ऋग्वेदे दासः सामाजिकसङ्घटनतया निर्दिष्टः। विरलमेवेदृशं स्थलं लभ्यते, यत्र सेवके 'दासः' इति शब्दः प्रयुक्तः[8]। उत्तरवर्त्तिसंहितासु पुरुषाणां स्त्रीणां च दानस्योल्लेखो लभ्यते।

"आत्मनो वा एष मात्रामाप्नोति यो उभयादत्प्रतिगृह्णात्यश्वं वा पुरुषं वा वैश्वानरः द्वादशकपालं निर्वपेदुभयादत्प्रतिगृह्य" ( तै० सं० २।२।६।३ ); "सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्याय" ( बृ० उ० ४।४।२३ ); "गोऽश्वमिह महिमेत्याचक्षते हस्ति हिरण्यं दासभार्यं क्षेत्राण्यायतनानि" इति ( छा० उ० ७।२४।२ )।

एतेषु सर्वेष्वप्युद्धरणेषु दासविक्रयः क्वापि नोल्लिखितः, यो दासताया मूलाधारोऽस्ति। 'शूद्रश्च धर्मशास्त्रत्वात्' इति जैमिनीयसूत्रं व्याचक्षाणेन च शबरस्वामिना ( ६।७।६ ) विषयः स्पष्टीकृतोऽस्ति। 'शूद्रश्च न देय इत्यन्वादेशः'। कुतः? धर्मशास्त्रत्वात्। धर्मशासनो-

---

१–त्यक्रतून् ग्रन्थिनो मृध्रवाचः पणिरश्रद्धाँ अवृधाँ अयज्ञान्।
प्र प्र तान्दस्यूँरग्निर्विवाय पूर्वश्चकारा पराँ अयज्यून्॥
( ऋ० वे० ७।६।३ )

२ ऋ० वे० १।५१।८; १।१७५। ३; ६।१४।३; ७.६।३; ५।२९।१०।

३. ऋ० वे० ६।२८।८।

४. ऋ० वे० ६।३१।४; ६।२६।५।

५. ऋ० वे० ४।३।१५; ६।४७।२१; ७।९९।५।

६. तेन दस्यून् व्यसहन्त देवा हन्तासुराणामभवच्छचीभिः। तै० सं० ४।३।११।३।

७. ऋ० १।१।४; १।१४७।७; ३।१२।६; ६।६०।६; ७।८३।१; ६।२२।१०; १०।६९।६; १०।८३।१; १०।१०२।३।

८–शतं मे गर्दभानां शतमूर्णावतीनाम्।
शतं दासाँ अतिस्रजः॥ ऋ० ८।५६।३।
यो मे हिरण्यसन्दृशो दश राज्ञो अमंहत।
अधस्पदा इच्चैद्यस्य कृष्टयश्चर्मम्ना अभितो जनाः।
अदान्मे पौरकुत्स्यः पंचाशतं त्रसदस्युर्वधूनाम्।
( ऋ० ८।१९।३६ )

९. ऐ० ब्रा० ३९८।

पनतत्वात् तस्य। एवमसौ तस्मै "त्रैवर्णिकायोपनत इमं शुश्रूषमाणो धर्मेण सम्पत्स्य इति। सोऽन्यस्मै दीयमानो नेच्छेदपि। न चानिच्छतस्तस्य स प्रभवति।"

मनुनिर्दिष्टव्यवस्थानुसारं दास्यतात्पर्यमिदं वर्तते—

दास्यं तु कारयँल्लोभाद् ब्राह्मणः संस्कृतान् द्विजान्।
अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि षट्॥

(८।४१२)

कुल्लूकभट्टेन पादप्रक्षालनादिकं दास्यकर्मतया प्रतिपादितम्। अग्रिमेषु श्लोकेषु क्रीतदासस्योल्लेखोऽस्ति—

शूद्रं तु कारयेद् दास्यं क्रीतमक्रीतमेव वा।
दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वयम्भुवा॥
न स्वामिना विसृष्टोऽपि शूद्रो दास्याद् विमुच्यते।
विसर्गजं हि तत्तस्य कस्तस्मात् तदपोहति॥
ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्रिमौ।
पैत्रिको दण्डदासश्च सप्तैते दासयोनयः॥

(८।४१३-४१५)

सप्तविधा दासाः कुल्लूकभट्टेनेत्थं व्याख्याताः—

"यस्मादसौ ध्वजाहृतत्वादिना दासत्वं गतः, स तेन त्यक्तः स्वदास्याभावेऽपि शूद्रो ब्राह्मणस्य दास्यान्न विमुच्यते। तस्माद् दास्यं शूद्रस्य सहजम्। कः शूद्रत्वजातिमिव दास्यमपनयति। अदृष्टार्थमप्यवश्यं शूद्रेण ब्राह्मणादिद्विजशुश्रूषा कर्तव्येत्येव परमेतत्। अन्यथा वक्ष्यमाणदास्यकरणपरिगणनमनर्थकं स्यात्" (८।४१४)।

"संग्रामस्वामिसकाशाद् जितो भक्तलोभाद्युपगतदास्यो भक्तदासः, तथा दासीपुत्रः, मूल्येन क्रीतः, अन्येन दत्तः पित्रादिक्रमागतः, दण्डादिधनशुद्ध्यर्थं स्वीकृतदास्यभावः— इत्येतानि सप्त ध्वजाहृतत्वादीनि दासत्वकारणानि" (८।४१५)।

नारदेन च पञ्चदशविधा दासा वर्णिताः—

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः।
अशनादिभृतस्तद्वदाघतः स्वामिना च यः॥
ऋणाच्च मोक्षितोऽनल्पाद् युद्धप्राप्तः पणे जितः।
तवाहमित्युपगतः प्रव्रज्यापसृतः कृतः॥
भक्तदासश्च विज्ञेयस्तथैव वडवाभृतः।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदशस्मृताः॥
तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते।
प्रसादात् स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम्॥

यश्चैनं स्वामिनं कश्चिन्मोक्षयेत् प्राणसंशयात् ।
दासत्वात् स विमुच्येत पुत्रलाभं लभेत च ॥
अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत् ।
सम्भक्षितं यद् दुर्भिक्षे न तच्छुध्येत कर्मणा ॥
आधत्तोऽथ धनं दत्वा स्वामी यद्येनमुद्धरेत् ।
अथोपगमयेदेनं सोऽपि क्रीतादनन्तरः ॥
दत्वा तु सोदयमृणमृणी दास्याद् विमुच्यते ।
कृतकालाभ्युपगमात् कृतकोऽपि विमुच्यते ।
तवाहमित्युपगतो युद्धप्राप्तः पणे जितः ॥
प्रतिपुरुषदानेन मुच्येरंस्तुल्यकर्मणा ।
राज्ञ एव तु दासः स्यात् प्रव्रज्यापसृतो नरः ।
न तस्य प्रतिमोक्षोऽस्ति विशुद्धिर्वा कथञ्चन ॥
भक्तस्योपेक्षणात् सद्यो भक्तदासः प्रमुच्यते ।
निग्रहाद् वडवायाश्च मुच्यते वडवाभृतः ॥
विक्रीणाति स्वतन्त्रः सन् य आत्मानं नराधमः ।
सुजघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ॥
चोरापहृतविक्रीता ये च दासीकृता बलात् ।
राज्ञा मोक्षयितव्यास्ते दासत्वं तेषु नेष्यते ॥
वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ॥
स्वधर्मत्यागिनोऽन्यत्र दारवद् दासता मता ॥
तवास्मि इति य आत्मानमस्वतन्त्रः प्रयच्छति ।
न स तं प्राप्नुयात् कामं पूर्वस्वामी लभेत तम् ॥
अधनास्त्रय एवोक्ता भार्यादासस्तथा सुतः ।
एते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥
स्वदासमिच्छेद् यं कर्तुमदासं प्रीतमानसः ।
स्कन्दादादाय तस्याथ भिन्द्यात् कुम्भं सहांभसा ॥
अक्षताभिः सुपुष्पाभिर्मूर्धन्येनमवाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥

( नारदीयमनुसंहिता ५।२४-४१ )

नारदेन दासतायाः सर्वांशेन परिपूर्णा व्यवस्था निर्दिष्टा । अत्र दासतायाः आर्थिकाः सामाजिकाश्चाधाराः प्रकाशमायान्ति । दासानां द्वौ वर्गौ स्तः । तत्र केचन ईदृशा दासा ये कदाचिद् मुक्ता अपि भवन्ति, केचित्तु कथमपि मुक्तिं न प्राप्नुवन्ति । धर्मान्तरपरिवर्तिता दासता अपि भवति स्म । स्पष्टं यद् धर्मान्तरीयैर्जनैः सह यदा

वैदिकधर्मस्य सम्बन्धः आरब्ध आसीत्, तदा धर्मान्तरप्राप्ता अपि दासा विहिताः। सेवापरतया प्रयुक्ताया दासतायाः श्रमपरतया प्रयुक्तायाः दासतायाश्च भेदोऽपि प्रकाशमायाति। दासान् पण्यवत् क्रेतुं विक्रेतुं च शक्यन्ते। दासस्वामी अन्यस्मै दासं वस्तुवद् दातुमपि शक्नोति। केषाञ्चिन्मतं यत् त एव शूद्रा दासा भवितुमशक्नुवन् यैर्धर्मान्तरमवलम्ब्यते स्म। अत्र विषयेऽर्थशास्त्रीयव्यवस्था अवश्यं प्रस्तोतव्या—

'उदरदासवर्जमार्यप्राणमप्राप्तव्यवहारं शूद्रं विक्रयाधानं नयतः स्वजनस्य द्वादशपणो दण्डः। वैश्यं द्विगुणः, क्षत्रियं त्रिगुणः, ब्राह्मणं चतुर्गुणः। परजनस्य पूर्वमध्यमोत्तमवधा दण्डाः क्रेतृश्रोतॄणां च। म्लेच्छानामदोषः प्रजां विक्रेतुमाधातुं वा। न त्वेवार्यस्य दास्यभावः। अथवार्यमाधाय कुलबन्धनम्, आर्याणामापदि निष्क्रयं चाधिगम्य बालं साहाय्यदातारं वा पूर्वं निष्क्रीणीरन्। सकृदात्माधाता निष्पतितः सीदेत्। द्विरन्येनाहितकः। सकृदुभौ परविषयाभिमुखौ। वित्तापहारिणो वा दासस्यार्यभावमपहरतोऽर्धदण्डः। निष्पतितप्रेतव्यसनिनामाधाता मूल्यं भजेत्। प्रेतविण्मूत्रोच्छिष्टग्राहणमाहितस्य नग्नस्तापनं दण्डप्रेषणमतिक्रमणं च स्त्रीणां मूल्यनाशकरम्। धात्रीपरिचारिकार्धसीतिकोपचारिकाणां च मोक्षकरम्। सिद्धमुपचारकस्याभिप्रजातस्यापक्रमणम्। धात्रीमाहितिकां वा कामां स्ववशामधिगच्छतः पूर्वसाहसदण्डः। परवशां मध्यमः। कन्यामाहितकां वा स्वयमन्येन वा दूषयतो मूल्यनाशः शुल्कम्, तद्द्विगुणश्च दण्डः। आत्मविक्रयिणः प्रजामार्यां विद्यात्। आत्माधिगतं स्वामिकर्माविरुद्धं लभेत पित्र्यं च दायम्। मूल्येन चार्यत्वं गच्छेत्। तेनोदरदासाहितकौ व्याख्यातौ। प्रक्षेपानुरूपश्चास्य निष्क्रयः। दण्डप्रणीतः कर्मणा दण्डमुपनयेत्। आर्यप्राणो ध्वजाहृतः कर्मकालानुरूपेण मूल्यार्धेन वा विमुच्येत। गृहे जातदायागतलब्धक्रीतानामन्यतमं दासमूनाष्टवर्षं विबन्धुमकामं नीचे कर्मणि विदेशे दासीं वा सगर्भामप्रतिविहितगर्भभर्मण्यां विक्रयाधानं नयतः पूर्वः साहसदण्डः क्रेतृश्रोतॄणां च। दासमनुरूपेण निष्क्रयेणार्यमकुर्वतो द्वादशपणो दण्डः। संरोधश्चाकारणात्। दासद्रव्यस्य ज्ञातयो दायादाः। तेषामभावे स्वामी स्वामिनोऽस्यां दास्यां जातं समातृकदासं विद्यात्। गृह्या चेत् कुटुम्बार्थचिन्तनी माता भ्राता भगिनी चास्या अदासाः स्युः। दासं दासीं वा निष्क्रीय पुनर्विक्रयाधानं नयतो द्वादशपणो दण्डः। अन्यत्र स्वयं वादिभ्य इति दासकल्पः।"
( ३।१३।१-२६ )।

दासताविषयकाणां धर्मशास्त्रीयाणाम्, अर्थशास्त्रीयाणां च मतानामुपस्थापने स्पष्टं भवति यदर्थशास्त्रं कस्यामपि परिस्थितावार्याणां दासतां न समर्थयते। अवयस्कबालकानां विक्रये दण्डो व्यवस्थापितोऽस्ति। अत्र विषयेऽर्थशास्त्रे व्यवस्थाद्वयी लभ्यते। तत्रैका व्यवस्था वैदिकसमाजीयव्यक्तीनां कृते, अपरा च म्लेच्छानाम्। स्वसमाजानुसारं व्यवस्थाकरणे म्लेच्छाः स्वतन्त्रा आसन्। फलतो यदि ते स्वपुत्रान् स्वस्त्रियो वा विक्रेतुमिच्छन्ति, तदा तेषामासीत् स्वातन्त्र्यम्। अर्थात् स्वेच्छानुसारं म्लेच्छाः पुत्रादीनि विक्रेतुं

प्रभवन्ति स्म, किन्त्वार्या एवं कर्तुं नाक्षमन्त। यदि परिस्थितिविशेषे आर्यो दासतया बद्धः स्यादपि, तदा तस्य मुक्तौ प्रयतनीयम्। एतेन न तस्यार्यत्वं विनश्यति। आर्यो न कदाप्यार्यत्वविहीनो भवितुं शक्नोति। धर्मशास्त्रेषु दासताविषयेऽप्यनुलोम-प्रतिलोम-विधिर्दृश्यते। धर्मशास्त्रेष्वार्यस्य दासता विहिता, एतावानेव प्रतिबन्धो यदुच्चवर्णेन निम्न-वर्णस्य दास्यं नाचरणीयम्।

कात्यायनमतानुसारं ब्राह्मणं विहाय सर्वेऽपि (क्षत्रियादयः) दास्यमाचरितुं शक्नुवन्ति। यदि कश्चिद् ब्राह्मणो दास्यं कर्तुमिच्छेदपि, तदा तेनेदमवधेयं यत् तत्कर्म जघन्यं न भवेत्। अर्थाद् जघन्यकर्मविषयकं दास्यं कदापि ब्राह्मणेन नाचरणीयम्। आधुनिकभाषायां कथयितुं शक्नोति यदर्थशास्त्रानुसारं राष्ट्रियता दासताया आधार आसीत्। धर्मशास्त्रानुसारं च दासताया आधारो जन्म। अर्थशास्त्रं तु दासानामपि जघन्यकर्माचरणं निषेधयति। नारदस्तु शुभकर्मजघन्यकर्म चाश्रित्य दासानां मुक्तिभेदं च व्यवस्थापयति। अर्थशास्त्रं दासान् अधिकारहीनान् मन्यते। तेषामधिकाराणां सुरक्षाया उत्तरदायित्वं राज्येऽस्ति। यस्तैर्जघन्यं कर्म कारयति। सोऽर्थशास्त्रानुसारं दण्डनीयो भवति, यदि तत्कर्म प्रतिज्ञापत्रे नोल्लिखितं भवेत्। तेषु (दासेषु) अशोभनो व्यवहारोऽपि कर्तुं न शक्यते स्म। अत्राप्यस्ति दण्डव्यवस्था, विशेषतो दासीनां सतीत्वस्य सुरक्षायां ध्यानं दत्तमाचार्यैः। दासीशीलभंगो न केवलं पापमेव, अपि त्वपराधोऽपि। तत्रापराधानुसारं च विभिन्ना दण्डाः सन्ति व्यवस्थापिताः। यदि दासः प्रतिज्ञातानि कार्याणि सम्यक् परिपालयति, स्वामी च तं न मुंञ्चति, फलतः दास आर्यत्वं लब्धुमशक्तो भवति। अस्यां परिस्थितौ स्वामिने प्रथमं साहसदण्डो दीयते स्म। एवंविधदण्डानां व्यवस्थाः प्रायो धर्मशास्त्रेषु न दृश्यन्ते, यथा अर्थशास्त्रे मनुमतानुसारं दासता जन्मनि निर्भरा। अस्यां स्थितौ ततो मुक्तेस्च चर्चैव नोदेति। दासीशीलसुरक्षा धर्मशास्त्रेष्ववश्यं समर्थिता। दासानां सम्पत्ति-विषयकेष्वधिकारेष्वपि धर्मशास्त्रस्यार्थशास्त्रस्य चास्ति वैमत्यम्। 'काण्ट'मतानुसारं दासः स्वयं सम्पत्तिमर्जयितुं प्रभवति। तां चार्जितां सम्पत्तिं स्वापत्यायोत्तराधिकारितया दातुं शक्नोति। मनुनारददेवलकात्यायनप्रभृतयो धर्मशास्त्रकारास्त्वतो विपरीतमेव मन्यते यद् दासस्य सम्पद्यधिकारो नैव भवति। स यत् किमप्यर्जयति तत् सर्वं स्वामिनो भवति। एतदवश्यं यत् शूद्रोत्पन्नदासस्योत्तराधिकारं सोमिताधिकारं च मनुर्याज्ञवल्क्यश्च स्वीकुरुतः—

दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत्।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः॥

(मनु० ९।१७९)

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्।

(याज्ञ० २।१३३)

न्यायसम्बन्ध्यधिकारविषये अर्थशास्त्रधर्मशास्त्रयोन कश्चिद् भेदः, परन्तु दासमुक्तिविषये त्वस्त्येव मतभेदः। कौटल्यो दासमुक्तिं विशदं वर्णयति। याज्ञवल्क्यो नारदश्चापि दासानां मुक्तिं स्थापयतः। नारदेन पञ्चदशविधानां दासानां द्वौ वर्गौ प्रस्तुतौ। तत्र केचनेदृशा दासा वर्णिताः, येषां मुक्तिः स्वामिन इच्छानुरूपं भवति स्म। याज्ञवल्क्य-नारद-कात्यायनप्रभृतीनां मतमिदं यद् दासानां मुक्तिर्नैव विद्यत इति। कौटल्येन दास्यान्मुक्तिरतोऽन्यधिकं साख्यं नीता, किन्तु धर्मशास्त्रेषु नेदृशी व्यवस्था। मनुमतानुसारं तु जन्मैव दास्याय जायते। नारदो मुक्तदासेषु आर्याणां सर्वान् गुणान् तु मन्यते, केषाञ्चिद् दासानां मुक्तिर्नैव विद्यते। आपस्तम्बेन मनुना च दासस्य सुरक्षाया व्यवस्था निर्दिष्टा। यतः स छायाकल्पः—"छाया स्वो दासवर्गश्च" (मनु० ४।१८५); पतञ्जलिः—"शूद्रम् आर्यं मन्यते" ( ४।१० )।

कौटल्येन दासकल्पे समाजो द्वेधा विभाजितः, तत्र वर्णाश्रममर्यादासम्पन्न एकः समाजः, अपरश्च तद्बहिर्भूतः; यो म्लेच्छ इति कथितः। म्लेच्छद्वारा कृते दास-प्रथाप्रयोगे तेन किञ्चिदपि न नियन्त्रितम्। आर्याणां दासताविषयकोऽधिकारस्तेन समापितः। कौटलीयार्थशास्त्रविषये किञ्चिद् विवेचनात् पूर्वमर्थशास्त्रे दासकल्पादन्यत्रोपलब्धदासविषयकाणि वचनानीह प्रस्तूयन्ते :—

"दास्यो वा ··· चारं निर्हारयेयुः"—( १।१२।१५ )। "अतुष्यतः····गुप्तपुत्रदारान् आकरकर्मान्तेषु वा वासयेत्"—( १।१३।१८-२० )। "संसर्गं बाह्याभिश्च दासीभिः प्रतिषेधयेत्"—( १।२०।२८ )। 'शयनादुत्थितः स्त्रीगणैर्धन्विभिः परिगृह्येत"—( १।२१।१ )।

"स्नापकसंवाहकास्तरकरजकमालाकारकर्म दास्यः कुर्युः। ताभिरधिष्ठिता वा शिल्पिनः"—( १।२१।२८-२६ )।

"दासाहितकबन्धून् अशृण्वतः राजा विनयं ग्राहयेत्"—( २।१।२६ )। "स्तेनम् अनिसृष्टोपजीविनश्च बद्धं कर्म कारयेत्। दण्डोपकारिणश्च"—( २।१२।२२ )। "कणिका दासकर्मकरसूपकाराणाम्"—( २।१५।८१ )। "··· दासकर्मकरवर्गश्च विष्टिः"—( २।१५।८३ )। "दासकर्मकरेभ्यो वा वेतनं दद्यात्"—( २।१५ )।

"याश्च अनिष्कासिन्यः ··· आत्मानं बिभृयुः, ताः स्वदासीभिरनुसार्य सोपग्रहं कर्म कारयितव्याः"—( २।२३।१५ )।

"दण्डप्रतिकारिणीभिः ··· वृद्धराजदासीभिर्व्युपरतोपस्थानदेवदासीभिश्च कर्तयेत्"—( २।२३।२ )।

"बहुहलपरिकृष्टायां स्वभूमौ दासकर्मकरदण्डप्रतिकर्तृभिर्वापयेत्"—( २।२४।२ )। ··· दास- कर्मकरेभ्यो यथापुरुषपरिवापं भक्तं कुर्यात्। सपादपणिकं मासं दद्यात्"—(२।२४।३८-३९ )।

"वणिजस्तु ··· स्वदासीभिः पेशलरूपाभिरागन्तूनां वास्तव्यानां चार्यरूपाणां मत्तसुप्तानां भावं विद्युः"—( २।२५।१६ )। "दासहितकामाभ्याम् ···"—( ३।१।१३ )।

"प्रेतस्य व्यसनिनो वा साक्षिवचनमसारम् अभियोक्तारं दण्डयित्वा कर्म कारयेत्"—(३।१।४६)। "न भोगेन हरेयुः। उपनिधिम्, आधिम् ·· स्त्रियं सीमानम्"—(३।१६।३६–३७)। "परविषयाद् वा विक्रमेणानीतं यथा प्रदिष्टं राज्ञा भुञ्जीत, अन्यत्र आर्यप्राणेभ्यो देवब्राह्मणतपस्विद्रव्येभ्यश्च"—(३।१६।२६)। "स्वामी वा स्वकरणेन पञ्चपणिकं द्विपदरूपस्य निष्क्रयं दद्यात्"—(३।१६।२४)।

"महापशुमनुष्य ··· द्विशतावरः पञ्चशतपरो मध्यमः साहसदण्डः"—(३।१७।६)। "दास्याः गर्भम् औषधेन पातयतश्च पूर्वः साहसदण्डः"—(३।२०।२१)। परगृहीतां दासीम् आहितिकां वा संरुद्धिकाम् अधिगच्छतः पूर्वसाहसदण्डः। एकं दासं दासीं वा अपहरतः प्रेतभाण्डं वा विक्रीणानस्य द्विपादवधः षट्शतो वा दण्डः"—(४।१०।१९)। "कन्यां दासीं वा सहिरण्यमपहरतः, वामहस्तद्विपादवधः, नवशतो वा दण्डः" (४।१०।२२)।

"मनुष्य अपहारिण उत्तमो दण्डः शुद्धवधो वा"—(४।१०।२४)। "दासस्य दास्या वा ··· साचिव्यावकाशदाने कर्तृसमो दण्डः"—(४।१०)।

"परचक्राटवीहृताम् ··· निष्क्रयेण वापहयेत्"—(४।१२।४५–४६)। "स्वयं प्रकृता राजदास्यं गच्छेत्"—(४।१२)। "(लिङ्गच्छेदनं वधश्च)। सकामा तदेव लभेत्। दासपरिचारकाहितकभुक्ता च"—(४।१३।४३–४४)।

'दासकल्पेन' उक्तवचनैश्च विषयविवेचनावसरे दासव्यवस्थायाः स्वरूपं परिज्ञातुं शक्नुमः। युद्धप्राप्तदासविषये यत्र एवान्तिमनिर्णयस्याधिकारो राजशक्तेर्विकासस्य द्योतकोऽस्ति। कारागृहे बद्धानामपि दासानां मुक्तिः सम्भवति, यदि श्रमेण ते हानिं पूरयेयुः। केचन ईदृशा अप्यपराधाः सन्ति, यत्र ब्राह्मणोऽपि दास इव श्रमं कर्तुम्, आकरे प्रेषयितुं शक्यते। एवं प्रकारेण दण्डितानां जनानां परिवारस्य सुरक्षाया उत्तरदायित्वं राज्ये आसीत्।

अनार्येषु प्रचलितायां दासप्रथायां कौटल्येन प्रतिबन्धः स्थापितः। स्वामी दासम् अन्य-हस्ते विक्रेतुं न शक्नोति स्म ; न वा तं बन्धकं कर्तुम्। दासविषयकेषु स्वामिनोऽधिकारेषु कौटल्येन प्रचुरं नियन्त्रणं कृतम्। वर्षाष्टकाद् न्यूनायुषो बालका अत्यन्तापत्समये एव बन्धकाः कर्तुं शक्यन्ते स्म। अनेन नियमेन पुत्रस्योपरि पितुरधिकारो नियम्यते। बन्धनगतानां व्यक्तीनामप्यधिकारो व्यवस्थापितः। तैः सर्वप्रकाराणि कार्याणि पूरयितुं न शक्यन्ते। दास्याः कृतेऽन्यविधापि स्वतन्त्रता प्रदत्ता आसीत्। एतेषां नियमानां स्वामिकृतोल्लङ्घने दासा दास्यश्च दास्याद् मुक्तिं लभन्ते स्म। पुत्रवती दासी स्वत एव दास्याद् मुक्ता भवति स्म। न केवलं पुत्रोत्पत्त्या दास्या मुक्तिरेव, तस्याः पुत्रः सर्वविधानधिकारान् अधिगच्छति। इत्थं कौटल्येन दासप्रथायां दासानां स्वातन्त्र्यं समर्थितम्। पुत्रवत्या दास्या अधिकारा एतावत् समर्थिता यत् तस्याः सम्बन्धिनोऽपि दास्याद् मुक्तिं लब्धुं शक्नुवन्ति स्म। दासीषु दुर्व्यवहारे कठोरो दण्डो व्यवस्थापितः। गर्भवत्याः स्त्रियो बन्धनमवैधानिकममन्यत। स्पष्टं यद् ऋणदातुः स्वामिनो वा अधिकारेषु महद् नियन्त्रणं कौटल्येन

स्थापितम् । इदं मतं केचन आधुनिका विद्वांसः खण्डयन्ति[१]; किन्तु यानि वचनानि पुरस्कृत्य ते कौटल्यस्यासंगतिं प्रस्तुवन्ति, तानि वचनानि न कौटलीयानि, अपि तु महाभारतीयानि मानवानि च ।

कौटल्येन कार्यार्थमपि दासता स्वीकृता[२] । अस्य मतस्य संस्थापका आधुनिका विद्वांसः कौटल्यस्यैतद् वचनमुपस्थापयन्ति यद् दासस्य मुक्तेः पश्चात् तस्यार्यभाव इति कथनस्य तात्पर्यं यद् दासता आर्येष्वपि आसीत् । वस्तुत एवंविधा विद्वांसः 'आर्य' 'अनार्य' इति जातिद्वयं मन्यन्ते । वस्तुस्थितिस्त्वेषा यद् 'अनार्य'नामिका कापि जातिर्भारते नासीत् । साम्राज्यवादिभिरितिहासकारैः सा कल्पिता अस्ति । तत्कल्पने सन्ति कूटनीतिकानि कारणानि । आर्यशब्दः श्रेष्ठेऽर्थे प्रयुज्यते स्म संस्कृतसाहित्ये । अत्र कौटल्येनापि 'आर्यभाव' इति शब्दः श्रेष्ठरूपार्थे एव प्रयुक्तः, न तु जातिविशेषरूपार्थे । अनेन प्रकारेण भारतीयानां म्लेच्छेभ्यः श्रेष्ठताबोधनायैवार्यशब्दप्रयोगः, न तु जातिपर्यायतया । दासोऽपि मुक्तेः पश्चादेवार्यभावं श्रेष्ठभावनां वा लब्धुं शक्नोति । स्पष्टं यद् भारतीयानाम्, आर्याणां वा कथमपि दासतां न मन्यते कौटल्यः ।

सिकन्दराक्रमणेन सह यूनानभारतयोः सम्बन्धो जात इति विशेषत ऐतिहासिकैः प्रमाणैः सिध्यति । तदानींन्तनैर्यूनानीयलेखकैः स्पष्टं स्वीकृतमस्ति यद् भारते 'दासता' इति नासीत्[3] । किन्तु श्रीरमेशचन्द्रमजूमदारप्रभृतीनां लेखकानां मतं यद् यूनानीयलेखकैर्भारते दासेषु स्वामिनः क्रियमाणं मानवीयं व्यवहारं दृष्ट्वा भारते दासता नासीदिति भ्रान्तम् । वस्तुतः पश्चिमदेशे यादृशी दासता आसीत्, तादृशी दासता भारते नासीत् । अर्थशास्त्रे यद् स्वरूपमुपस्थापितमस्ति तेनातीव महत्त्वपूर्णस्थितिः पुर आयाति यद् वैदिकसमाजे दासता नासीत् । अस्याः प्रयोगो वैदिकसमाजेषु, अवैदिकविधिशासितेषु समाजेषु चासीत् । धर्मशास्त्रेषु दासताविषयकाः केचनोल्लेखा एवंविधाः सन्ति— "नाग्निं चित्वा रामाम् उपेयात् । कृष्णवर्णा हि रामा रमणाय, न धर्माय ।" (वा० १८।७-१८) ।

"अनार्यं शयने बिभ्रत् ···· तृणेष्वासीत् पृष्ठतम् ।"

(आपस्तम्ब० १।९।१७)

"यदेकरात्रेण करोति पापं कृष्णां वर्णां ब्राह्मणः सेवमानः ।"

(आप० १।१०)

---

१. Dev Raj Chanana, Slavery in Ancient India, PBH, P. 99.

२. तदेव ।

३. Mc Crindle; (i) The Invesion of India by Alexender the Great.
(ii) Ancient India As Described by Megasthanese.
(iii) Ancient India As Described by Ktesies.
(iv) Ancient India As Described by Classical Literature.
(v) India of Arrian.

"अकृत्स्नं पात्रमादाय दासः।"

( गौ० २०।२-४ )

"दास्या वा नवतमाहृतम्।"

( आप० १५।१६ )

"दासा वा राजकुलादाहृत्त्यातिथिवत् शूद्रं पूजयेयुः।"

( आप० ११।२।४ )

"काममात्मानं भार्यां पुत्रं वोपरुध्यान्नं त्वेव दासकर्मकरम्।"

( आप० २।४।६ )

क्रीता द्रव्येण या नारी, सा न पत्नी विधीयते।
सा न दैवे न सा पित्र्ये दासीं तां काश्यपोऽब्रवीत्।

( बौ० १।११।२१-२२ )

प्रस्तुतविवेचनेन स्पष्टं यद् प्राचीनभारते दासप्रथा आसीत्। वैदिकयुगे एषा दासता अवैदिकसमाजे आसीत्। ते एव ( अवैदिकसमाजीयाः ) दासाः क्रियन्ते स्म। इत्थमवैदिकीयो दासो वैदिकसमाजे सर्वथा वैधानिकाधिकाराद् वञ्चित आसीत्, अर्थात् तस्य कोऽपि वैधानिकोऽधिकारो नासीत्। इदमवधेयमासीद् यद् दासशब्दः सेवके प्रयुज्यते स्म। अस्यां स्थितावेकत्र समाजस्य समस्ताः सदस्या दासाः कथिताः। अस्मिन् समाजे कृषकपशुपालनादय आसन्। वैदिकयुगेऽवैदिकसमाजीयस्य दासस्य स्वाम्यधिकारविपरीताः सामान्या अधिकारा आसन्। ये कस्यापि विजितस्य समाजस्य दासानां सम्भवन्ति। वैदिकसमाजस्य नैतिकतायाः परिणाम एष आसीद् यद् दासैः सम्मानपूर्णानि स्थानानि लब्धान्यासन्।

वैदिकोत्तरकाले समाजान्तराणां सम्मिश्रणमारभ्यते। समाजे वैदिकानां सम्प्रदायानां भवत्युद्भवः। वर्णसांकर्यविषमिणी समस्याः पुर आयाति। अस्यां सामाजिकस्थितौ दासानां स्वरूपं भवति परिवर्तितम्। मनुनारदादिभिर्धर्मशास्त्रकारैर्दासानां नूतनं परिगणनं प्रस्तुतम्। तेषां कृते च नूतनानि विधानानि व्यवस्थापितानि। तेषामधिकारा विवेचयितुमारभ्यन्ते। दासशब्दस्य सम्बन्धोऽवैदिकैर्दस्युभिर्दासैश्च सहासीत्, ये वैदिकेषु विधिषु न श्रद्दधते। अस्यां नूतनायां परिस्थितौ पुनरीदृशाः सम्प्रदायाः समाजाश्च पुर आयान्ति, ये वैदिकविधितो बहिस्तिष्ठन्ति। फलतो धर्मशास्त्रेषु तेषां समानताया वैदिकसमाजीयोपलब्धिषु भागवत्ताया वा प्रश्न एव नोदेतुमशकत्। कैश्चिद् वैदिकवर्गैरवैदिकसमाजानां मान्यताः स्वीकृताः। अतस्तेऽपि दासवर्गे निवेशिताः। अस्यां स्थितौ वैदिकसमाजेऽपि जन्मना शूद्राः, किन्त्ववैदिकसमाजे दीक्षिता व्यक्तयो लब्धाः। ते दासा अपि कर्तुं शक्यन्ते स्म। वस्तुत एवंविधजनास्तु जन्मना वैदिकसमाजीया शूद्रा एव आसन्, अतस्तेषां दासताया विधानस्य समर्थनं वीक्ष्यैव निष्कर्षो न स्थापनीयो यद् भारते पाश्चात्त्यदेशेष्विव दासप्रथा प्रचलिता आसीत्।

# नाट्यशास्त्रम् आचार्यनन्दिकेश्वरश्च

डॉ० पारसनाथद्विवेदी

संस्कृतविभागः ( आगराकालेज ), आगराविश्वविद्यालयः

विदितमस्तु तत्रभवतां यदिह सकलकलाकलापकलितस्य मनु-याज्ञवल्क्य-गर्ग-गौतम-वसिष्ठ-पाणिन्यादिमहर्षिभिरध्युषितस्य वेदवेदाङ्गेतिहासपुराण-काव्य-नाटक-कथा-कोष-व्याकरणादिसत्साहित्यविभूषितस्य भारतभुवः पवित्रतमे भूभागे बहुविधसंपत्समृद्धायां जगल्ललामभूतायां भारतभाग्यलक्ष्मीधान्यां राजधान्यां दिल्लीनगर्यामस्यां सम्पद्यमाने विश्वसंस्कृतसम्मेलनेऽस्मिन् विश्वस्य प्रतिकोणतः समागताः प्राच्यसंस्कृतिसंरक्षणधुरीणाः, सुरगवीसंचरणप्रवीणाः, विविधशास्त्राचार्या महामनीषिणश्च। ईदृश्यां महापरिषदि मादृशानामल्पज्ञानां प्रवेशो दर्शकत्वातिरिक्तेन रूपेण कथमपि नोचितः। अयं च तत्रभवतां महानुभावानां महाननुग्रहो जन्मान्तरसञ्चितपुण्योदयश्च यदहं श्रीमत्सु समुपस्थातुं लब्धावसरोऽस्मीत्यात्मानं धन्यतरं कृतकृत्यं च मन्ये। तत्र श्रीमतां विद्वद्वराणां समक्षं वक्तृताया अनधिकारिणं मन्यमानस्य मे वाणी न स्फुरति किमपि वक्तुम्, किन्तु गुरुजनानां पुरस्तादज्ञानगोपनमपि गर्ह्यमिति मत्वा यथामति कतिपयैः शब्दैरेव स्वाभिप्रायं किञ्चिद् श्रीमत्सु विज्ञापयामि। तत्समारोहेऽस्मिन् समागतानां श्रीमतां महामनीषिणां पुरस्ताद् **नाट्यशास्त्रम् आचार्यनन्दिकेश्वरश्च** इति विषयमवलम्ब्य किञ्चिद्विवक्षुरस्मि। ततः सम्भाव्यमानास्त्रुटीः क्षमयितुं प्रार्थये क्षमापरान् महानुभावानिति।

धन्येयं सर्वभाषाभाषणमनोहरा भारतीयसंस्कृतिसंरक्षणपरा सुरभारती, यस्याः साहित्यं भारतीयसंस्कृतेः कलायाश्च महार्घो निधिः वरीवर्ति। अस्यां गीर्वाणवाण्यां प्रणीतानि शास्त्राणि, साहित्यक्षेत्रे निष्पादितानि कार्याणि चास्मद्देशस्य मस्तकं मण्डयन्ति। तद्दुःखग्राह्येऽस्मिन् साहित्यसागरे निमज्य रत्नान्यन्विष्यतो मे नूनमनधिकारचेष्टा धृष्टता स्यात्, यतो हि मे संस्कृतज्ञानमल्पतरमिति। काले कालेऽनेके महाकवयो नाट्याचार्याश्च प्रादुरभूवन्नस्मिञ्जगति, यैरकृत्रिमरसाभिरामाभिः कृतिभिः कलाभिश्च न केवलं साहित्यमेव, अपि तु समस्तं भूमण्डलमपि पावितम्। ईदृशेष्वाचार्यवर्येष्वाचार्यनन्दिकेश्वरस्याभिधानं विविधगुणगरिम्णातितरां राजते।

सर्वविधवसुन्धरा भारतवसुन्धरा कस्मिन् स्वीयोद्देशे कस्मिन् वत्सरे वाऽऽचार्यनन्दिकेश्वरं प्रसूयात्मानं सार्थकं कृतवतीति विषये मौनमेवालम्बते सर्वथेतिवृत्तम्। डॉ० मदनमोहनघोषमहोदयानां मतमस्ति यदाचार्यवर्येणामुना स्वजनुषा सम्भवतो दक्षिणदेशः पूतीकृतः। अपरे चैनं कैलासपर्वतवासिनं पार्वतीपतेर्भगवतो विश्वनाथस्यान्तेवासिनं मन्वते।

एवमनुश्रूयते वैवस्वतमनोस्त्रेतायुगस्यादौ 'क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत्' इति विविधकार्यविश्रान्तिभरितैरिन्द्रादिभिस्त्रिदशैः सम्प्रार्थितेन करुणार्द्रचेतसा वेधसा 'ऋग्वेदात् पाठ्यम्, सामवेदाद् गीतम्, यजुर्वेदादभिनयान्, अथर्ववेदाच्च रसान्'[1] संगृह्य नाट्यशास्त्रमाविष्कृतमित्येषा आख्यायिका भरतमुनिप्रणीते नाट्यशास्त्रे समुपलभ्यते। तेन च लोकपितामहेन पितामहेन सर्वप्रथमं महर्षये नारदाय गीतम्, स्वातये वाद्यं भरतमुनये च नाट्यं शिक्षितम्। तेषु स्वातिनारदौ तस्य प्रथमशिष्यौ भारते सङ्गीतं विस्तारयामासतुः। भरतमुनिश्च तेभ्योऽधिगम्य नाट्यविद्यां प्रथमम् 'अमृतमन्थनम्' नाम नाट्यं प्रायुङ्क्त। प्रयोगेऽस्मिन् तेन वेधसा स्वातिनारदौ वाद्यगीताभ्यां नियोजितौ, यतश्च सुष्ठुप्रयुक्ताभ्यां गीतवाद्याभ्यां नाट्यप्रयोगो न विपद्यते।[2] तत्रामृतमन्थनस्य सफलतामालोच्य वेधसाऽऽदिष्टेनाचार्यभरतेन त्रिपुरदाहस्याभिनयोऽदर्शि भगवते पार्वतीपतये। प्रयोगमिममवलोक्य भृशं तुष्टेन शिवेनाभ्यधायि यद् 'मयाऽऽविष्कृतं नानाकरणैरङ्गहारैश्चान्वितं नृत्यं पूर्वरङ्गे योजयतु भवान्' इति। ततश्च भगवतादिष्टः तण्डुः पूर्वरङ्गशोभाभिवृद्धयेऽङ्गहारं प्रयुक्तवान्। तेन प्रयुक्तं नृत्यमिदं 'ताण्डव'नाम्ना च प्रथितम्। अस्मिन्नेवावसरे शिवानुरोधेन भगवती पार्वती ब्रह्मणः समक्षं लास्यमपि प्रादर्शयत्। एतेन ज्ञायते यदाचार्यनन्दिकेश्वरो भरतसमकालिको भगवतो विश्वनाथस्य शिवस्य मुख्यगणश्चासीत्।

अभिनयदर्पणानुसारेण जगत्स्रष्टा भगवान् प्रजापतिर्नाट्यवेदं निर्मायाभिनयार्थं भरताय प्रायच्छत्। स च भरतमुनिर्नाट्य-नृत्त-नृत्यभेदैस्त्रिधा प्रकल्प्य तन्नाट्यवेदं गन्धर्वाप्सरोभिस्सार्द्धं शिवस्य पुरस्ताददर्शयत्। भरतमुनिना प्रयुक्ते तस्मिन्नभिनये उद्धतप्रयोगानालोक्य भगवान् शङ्करः स्वगणाग्रगण्या तण्डुना भरताय न्यदीदिशत्। प्रीत्या च पार्वत्या तस्मै लास्यमप्युपदिष्टम्। ततश्च भगवती पार्वती बाणासुरदुहितरमुषां लास्यमनुशासितवती। उषया च द्वारवतीगोप्यो लास्ये दीक्षिताः। गोपिकाभिश्च सौराष्ट्रललना लास्ये परिनिष्ठापिताः। ताभिश्चानेकदेशयोषितश्च शिक्षिता अभूवन्। इत्थं नाट्यशास्त्रमिदं समस्ते भूमण्डले प्रतिष्ठितम्।[3]

भावप्रकाशनकारस्य शारदातनयस्य मतमिदं यन्नाट्यवेदस्याविष्कर्ता भगवान् शङ्करोऽस्ति। भगवान् चतुरानन आब्रह्माण्डस्तम्बपर्यन्तं सृष्टिं विधाय विश्रान्तिसुखाधिगमाय

---

१. जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानथर्वणादपि॥
( १। १६ नाट्यशास्त्रम्, ओरियन्टल इन्स्टीट्यूट, बड़ौदा, १९३८ )

२. गीते प्रयत्नः प्रथमं तु कार्यः शय्यां हि नाट्यस्य वदन्ति गीतम्।
गीते च वाद्ये च हि सुप्रयुक्ते नाट्यप्रयोगो न विपत्तिमेति॥
( नाट्यशास्त्रम्, बड़ौदा )

३. अभिनयदर्पणः २-६ ( कलकत्तासंस्करणम् )।

जगद्रक्षकं लोकनायकं विष्णुमुपगतः। तेन प्रभविष्णुना शङ्करान्तिकं प्रहितः सः। तत्खेदं परिज्ञाय भगवता शङ्करेण च स्वरचितस्य नाट्यवेदस्य शिक्षा नन्दिकेश्वराय प्रादायि।[१]

कविराजेन राजशेखरेण काव्यमीमांसायां काव्यविद्योत्पत्तिप्रसङ्गे 'रसाधिकारिकं नन्दिकेश्वरः' इत्यभिहितम्।[२] तेन च ज्ञायते यदनेनाचार्यनन्दिकेश्वरेण संगीतविषयकग्रन्थोऽपि विरचितः।

सिंहभूपालमतानुसारं नन्दिकेश्वरस्य प्रथमा कृतिः 'नन्दिकेश्वरसंहिता' वर्तते, किन्तु ग्रन्थोऽयमधुनानुपलब्ध एवास्ति। केवलं समुद्धरणमात्रेण सत्तास्य वरीवर्ति। 'नन्दिकेश्वर-संहिता' नाट्यपरो ग्रन्थः प्रतिभासते, यत्र चानुमीयते नाट्यशास्त्रस्य संवादाभिनय-गीतवाद्यरसादिप्रमुखविषयाणां विवेचनं भवेत्? एतदपि सम्भाव्यते यन्नन्दिकेश्वरसंहितायाः कश्चित् खण्डितांशो भवेत् प्राप्तः, यमाधारीकृत्याभिनयपरानध्यायान् संयोज्य 'अभिनयदर्पणः' संगीतपरानध्यायान् संयोज्य च 'भरतार्णवः' सम्पादितो भवेत्। शेषश्च विषयः कालकलया विनाशमुपगतः। यतो ग्रन्थद्वयमदः परस्परं पूरकतया प्रतिभासते। 'भरतार्णवे' प्रारम्भिका-ध्यायचतुष्टयमभिनयपरमवशिष्टं च संगीतपरं विद्यते। प्रारम्भिकाध्यायचतुष्टये तु हस्ता-भिनयस्य विवेचनं विद्यते। ग्रन्थारम्भश्च हस्ताभिनयेनैव भवति, अतो ज्ञायते यद् ग्रन्थस्य पूर्वभागे केचिदपरे विषया आसन् विद्यमानाः, ये केनापि कारणेन विनष्टा उपलब्धांशांश्च प्रकाशिताः। एतद्धि 'अभिनयदर्पणो भरतार्णवश्च'इति ग्रन्थद्वयं नन्दिकेश्वरनाम्ना प्रकाशितं दरीदृश्यते। तत्राभिनयदर्पणो डॉ० मदनमोहनघोषद्वारा १९५७ ईशव्यां कलिकातानगर्यां सम्पादितो वर्तते। भरतार्णवश्च १६५७ ईशव्यां 'सरस्वतीमहलपुस्तकालय, तन्जौर'प्रदेशे प्रकाशितो वर्तते।

तामिलभाषायाम् 'पञ्चभरतम्' नाम्नी रचनैकोपलभ्यते। एषा नारदेन सम्बन्धिता प्रतिपाद्यते। सम्भवतो नारदेन ग्रन्थेऽस्मिन् संगीतस्य पञ्चप्रकाराणामुपरि विचारो विहितो भवेत्, यश्च नर्तनेन नाट्येन वा सम्बद्धः सम्भवेत्, अत एवास्याभिधानम् 'पञ्चभरतम्' इति वर्तते। यतश्चादिभरतं मातविंगभरतमर्जुनभरतं हनुमद्भरतं नन्दिभरतमिति भरत-सम्बद्धानि पञ्च नामानि श्रूयन्ते। एषु 'आदिभरतम्' एकः संग्रहग्रन्थो विद्यते, यत्र नाट्यस्य नृत्यस्य च सिद्धान्ताः प्रतिपादिताः। अस्मिन् ग्रन्थे पञ्चस्कन्धाः, द्वात्रिंशदध्यायाः, द्विशतोत्तरैकविंशतिसंख्यकानि प्रकरणानि, षट्सहस्रसंख्याकाः श्लोकाश्चासन्। शारदा-तनयस्यानुसारमस्य रचना आदिभरतेन वृद्धभरतेन वा कृता।

'मातविंगभरतम्' पश्चाद्भवा लक्ष्मणाचार्यस्य कृतिरस्ति। अर्जुनभरतम्' अर्जुना-चार्यविरचितं प्राचीनं पुस्तकं वर्तते, यस्मिन् तालहस्तौ विशेषतो विचारितौ। हनुमद्भरतम्' नामको ग्रन्थः 'सरस्वतीमहल'नामके ग्रन्थालये सूच्यां क्रमाङ्के प्रथमतश्चतुर्थे प्राप्यते, यस्मिन् संगीतनृत्यविषये विचारो विहितः। संगीतविषयकग्रन्थेषु हनुमन्मतस्योद्धरणानि

१. भावप्रकाशनम्, शारदातनयः, बड़ौदा-संस्करणम्, पृ० २८५।
२. काव्यमीमांसा, राजशेखरः १।१।

समुपलभ्यन्ते। 'नन्दिभरतः' संगीतस्याचार्य आसीत्, येन संगीतविषयमधिकृत्य पुस्तकं लिखितम्।

नाट्यशास्त्रे काव्यमालासंस्करणान्ते लिखितमिदम्-'**समाप्तश्चायं नन्दिभरत-संगीतपुस्तकम्**'। एतेन ज्ञायते यदासीत् कश्चिद् नन्दिभरतनामाचार्यः, येन संगीत-विषयकपुस्तकमलेखि। कोऽसौ नन्दिभरतः? किमयमेकः, उत वा द्वौ पुरुषौ? किमेकस्य द्वयोर्वाभिधानमिदमिति विचारणीयं वर्तते। श्रीमदभिनवगुप्तपादाचार्यो नन्दिनं भरतं च पृथक् पृथग् व्यक्तिद्वयं मनुते, तथा तयोरपरं नाम तण्डुर्मुनिश्चाभिधत्ते "तण्डुमुनिशब्दो **नन्दिभरतयोरपरनामनी**"[१]। महाकविना रामकृष्णकविनापि समर्थितं मतमिदं यन्नन्दिकेश्वरस्तण्डुश्चैक एवासीत्। अनेनैव च 'नन्दिकेश्वरसंहिता' नामको ग्रन्थो व्यलेखि, किन्तु ग्रन्थस्यास्य बहुभागो विनष्टोऽवशिष्टश्चांश एव वर्तमानोऽभिनयदर्पणो वर्तते[२]।

एवं हि श्रूयते यदेकदा शुक्राचार्यादुपात्तविद्यैरसुरैर्देवेभ्यो नृत्ये प्रतियोगिताया सस्पर्धं निमन्त्रणमदायि। अतो देवराजेन नन्दिकेश्वरो भरतार्णवस्य चतुःसहस्रश्लोककले-वरस्य रचनायै प्रार्थितः। नन्दिकेश्वरेण चासुराणां सा प्रतियोगिता स्वीकृता। सुरेन्द्रेण सुमतये भरतार्णवे शिक्षावाप्तये निर्देशो दत्तः। ततो नन्दिकेश्वरेण सुमतये भरतार्णवस्य शिक्षा प्रादायि। अत एव भरतार्णवः 'सुमतिबोधक'पदेनापि व्यपदेशमश्नुते[३]।

एवं चाचार्यनन्दिकेश्वरस्याभिनयदर्पणो भरतार्णवश्चेति रचनाद्वयी संराजते संस्कृत-नाट्यक्षेत्रे। तथा चाभिनयविद्याया उन्मेषकर्त्राऽऽचार्यनन्दिकेश्वरेणाभिनयदर्पणनामके ग्रन्थे चतुर्वर्गफलप्राप्त्युपायभूतं सुखसौभाग्यकरं ब्रह्मानन्दतोऽप्यधिकानन्दप्रदायकं व्युत्पत्ति-शास्त्रविबोधाधायकं नाट्यशास्त्रमिति मत्वा नाट्यशास्त्रस्याभिनयदृष्ट्या नाट्य-नृत्त-नृत्य-रूपेण भेदत्रयं प्रकल्प्य तस्य प्रयोगकालोऽपि निर्दिष्टः। तत्र नाट्यनृत्ययोः प्रयोगो विशेषतः पर्वकाले नृत्तप्रयोगश्चाभिषेकादिमहोत्सवेषु कार्यः। नन्दिकेश्वरमतानुसारेण पूर्वकथा-संयुतोऽभिनयो नाट्यम्, भावाभिनयहीनं नाट्यं नृत्तम्, रसभावव्यञ्जनादियुतं नाट्यं नृत्यमुच्यते[४]।

## अभिनयनिरूपणम्—

कोऽसावभिनय? इत्यभिनयशब्दस्य व्युत्पत्तिं विधास्यता नाट्यशास्त्रे लिखितमाचार्य-भरतेन—अभीत्युपसर्गपूर्वकप्रापणार्थकात् णीञ्धातोरच्प्रत्यये कृतेऽभिनयशब्दो निष्पद्यते[५]।

---

१. अभिनवभारती, बड़ौदासंस्करणम्, पृ० ८८।

२. दि क्वार्टरली जर्नल आफ दि आंध्र हिस्टारिकल रिसर्च सोसाइटी, भाग ३, पृ० २५-२६।

३. "इति नन्दिकेश्वरविरचिते भरतार्णवे सुमतिबोधके चारीद्वयप्रकरणं नाम अष्टमाध्यायः"—भरतार्णवः, पृ० २८८।

४. अभिनयदर्पणम्, श्लो० ११-१६।

५. अभिपूर्वस्तु णीञ्धातुराभिमुख्यार्थनिर्णये।
यस्मात् प्रयोगं नयति तस्मादभिनयः स्मृतः॥
(नाट्यशास्त्रम् ८।१)

कविराजेन विश्वनाथेन 'भवेदभिनयोऽवस्थानुकारः' इत्यभिनयलक्षणमुक्तम्। एवं चाभिनये बाह्यप्रसाधनापेक्षया वस्तुतोऽन्तर्भावानभिव्यञ्जयितुमधिकं महत्त्वं वर्तते। मनःशरीरयोरेकाग्रतया चान्तर्भावाभिव्यञ्जनं सम्भाव्यते। उक्तं चाचार्यनन्दिकेश्वरेण यदभिनयप्रयोगे यस्यां दिशि हस्तसंचालनं कुर्यात् तत्रैव दृष्टिं निक्षिपेत्, यत्र दृष्टिं निक्षिपेत् तत्रैव मनो निवेशयेत्, यत्र मनस्तदनुसारं भावानभिव्यञ्जयेत्, भावानुरूपं रसान् सृजेत्। यथा चोक्तम्—

यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मनः।
यतो मनस्ततो भावो यतो भावस्ततो रसः॥[1]

एवं च नृत्यगीताभिनयादिषु नाट्याङ्गेष्वभिनयस्य प्राधान्यमुपलभ्यते। तत्राभिनयस्य चातुर्विध्यमुक्तमभिनयदर्पणे—

आङ्गिको वाचिकस्तद्वदाहार्यः सात्त्विको परः।

तत्राङ्गैर्निदर्शित आङ्गिकोऽभिनयः, वाचा विरचितो वाचिकाभिनयः, सात्त्विकैर्भावैरभिभावितः सात्त्विकाभिनयः, हारकेयूरादिभिरलङ्कृत आहार्याभिनयश्चोच्यते।[2] अभिनयस्येमे चत्वारो प्रकारा भगवतो नटराजस्य शिवस्य चत्वारि रूपाणि सन्ति। उक्तं चाभिनयदर्पणे मङ्गलश्लोके—समस्तेयं सृष्टिर्यस्याङ्गिकोऽभिनयः, समस्तं वाङ्मयं यस्य वाचिकोऽभिनयः, चन्द्रतारादिमण्डितं नभो यस्याहार्याभिनयः, स्वयं च यः सात्त्विकाभिनयरूपेण संराजते, तं नटराजराजं शिवं नमस्कुर्मः। यथा—

आङ्गिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम्।
आहार्यं चन्द्रतारादि तं नुमः सात्त्विकं शिवम्॥[3]

एषु चतुर्विधाभिनयेषु प्राधान्यत आङ्गिकाभिनयस्य विवेचनं दृश्यतेऽभिनयदर्पणे। स चाङ्ग-प्रत्यङ्गोपाङ्गैः प्रदर्शितोऽभिनय आङ्गिकाभिनय उच्यते। अभिनयदर्पणे नाट्यशास्त्रे च शिरो हस्तौ वक्षः पार्श्वौ कटीतटौ पादौ चेति षडङ्गानि निरूपितानि सन्ति। केचित्तु ग्रीवां सप्तममङ्गं निरूपयन्ति। स्कन्धौ बाहू पृष्ठमुदरमूरू जंघे षडिमानि प्रत्यङ्गानि निर्दिष्टानि, अपरे नाट्याचार्या मणिबन्धकौ जानुनी कूर्परौ ग्रीवा चेत्यतिरिक्तानि प्रत्यङ्गानि निरूपयन्ति। अभिनयदर्पणे दृष्टिभ्रूपुत्तलिकाः कपोलौ नासिका जानुनी दन्ताधरजिह्वाः चिबुकं मुखं मस्तकाङ्गानि चेत्युपाङ्गानि निर्दिष्टानि। एतदतिरिक्तानि पार्श्वौ गुल्फौ करपादानां तलानि, अङ्गुल्यश्चाप्युपाङ्गानि निर्दिष्टान्यभिनयदर्पणे। नाट्यशास्त्रे चाचार्यभरतेन शिरो हस्तौ ऊरू पार्श्वौ कटितटौ पादौ चेति षडुपाङ्गानि निरूपितानि। यद्यपि भेदोपभेदैरनेकविधानि सन्त्यङ्गप्रत्यङ्गोपाङ्गानि, किन्त्वत्राभिनयदर्पणे नृत्यमात्रोपयुक्तान्येवाङ्गप्रत्यङ्गो-

---

१. अभिनयदर्पणः ,, श्लोक ३७।
२. तदेव ,, श्लोक ३९, ४०।
३. तदेव ,, श्लोक १।

पाङ्गानि विवेचितानि सन्ति। वस्तुतो हस्तपादा स्वाभिनयस्य मुख्यानि साधनानि सन्ति। अत एवाभिनयदर्पणे विशेषेणाभिहिताश्च हस्तपादाभिनया इति।

भरतार्णवो नन्दिकेश्वरस्यापूर्णा कृतिः प्रतिभासतेऽभिनयदर्पणस्य पूरकश्चोच्यते। तत्र सन्ति पञ्चदशाध्यायाः, यत्र नाट्यस्य विशेषतः संगीतस्य भूयानंशो विवेचितो वर्तते। भरतार्णवस्यादावध्यायचतुष्टये हस्तपाददृष्टिभेदानां प्रतिपादनं विद्यते, अनन्तरं च स्थानक-ताल-चार्यङ्गहार-सप्तलास्यादीनां निरूपणं वर्तते।

## हस्ताभिनयः

सर्वैरेव नाट्याचार्यैर्हस्ताभिनयस्य भेदद्वयं प्रतिपादितम्—असंयुतहस्ताः संयुतहस्ताश्च। तत्रैकेन हस्तेन प्रयुक्तोऽभिनयोऽसंयुक्तहस्ताभिनयः, द्वाभ्यां हस्ताभ्यां प्रयुक्तोऽभिनयः संयुतहस्ताभिनयश्चोच्यते। तत्रासंयुतहस्तस्य सप्तविंशतिभेदा निरूपिता भरतार्णवे,अभिनयदर्पणे तु तस्याष्टाविंशतिभेदाः परिगणिताः। भरतार्णवे निरूपिताः सप्तविंशतिभेदास्तु तथैव विवेचिता अभिनयदर्पणे, किन्तु 'त्रिशूल'नामैकोऽतिरिक्तभेदोऽपि वर्तते तत्र। नाट्यशास्त्रे त्वसंयुतहस्तस्य चतुर्विंशतिभेदा निरूपिताः सन्ति। संयुतहस्तस्य तु षोडशभेदा निरूपितास्तत्र भरतार्णवे, अभिनयदर्पणे तु त्रयोविंशतिभेदाः, तथा नाट्यशास्त्रे त्रयोदशभेदाश्चोक्ताः संयुतहस्ताभिनयस्य।

भरतार्णवे नृत्तहस्तानां सूच्यां तु षोडशप्रकारका नृत्तहस्ता उल्लिखिताः, किन्तु ग्रन्थमध्ये द्वाविंशतिप्रकारा नृत्तहस्ताः सन्ति विवेचिताः।[१] 'सरस्वतीमहल'नामके पुस्तकालये विद्यमाने हस्तलेखे षोडशनृत्तहस्तातिरिक्ताः षडन्ये नृत्तहस्ता वर्णिताः सन्ति। एवं पाण्डुलिपिनिर्दिष्टानां षण्णां नृत्तहस्तानां संयोजनेन द्वाविंशतिविधा जायन्ते नृत्तहस्ताः। अभिनयदर्पणे त्रयोदशविधा नृत्तहस्ताः, तथा नृत्तहस्तानां पञ्चधा गतयश्च सन्ति निर्दिष्टाः। नाट्यशास्त्रे तु त्रिंशद्विधा नृत्तहस्ताः सन्ति निरूपिताः, भरतार्णवे नृत्तहस्तेषु केचिद्धस्ताः संयुतहस्तैः सह योजिताः, नाट्यशास्त्रे च ते नृत्तहस्तेषु सम्मिलितीकृताः। अतो भरतार्णवे नृत्तहस्तानां संख्या न्यूना नाट्यशास्त्रे चाधिका वर्तते। एतदतिरिक्तं भरतार्णवे बृहस्पतिमतेनापि हस्ताभिनयस्य सप्तविंशतिभेदा निरूपिताः सन्ति।

## पादाभिनयः

आचार्यनन्दिकेश्वरेण हस्ताभिनयस्येव पादाभिनयस्यापि महत्त्वमङ्गीकृतम्। भरतार्णवे चतुस्त्रिंशत्पादभेदाः सन्ति निर्दिष्टाः[२]। अभिनयदर्पणे तु मण्डलमुत्प्लवनं भ्रमरी पादचारिका चेति चतुर्धा पादभेदा निरूपिताः। नाट्यशास्त्रेऽपि एत एव पादभेदाः सन्ति वर्णिताः। किन्त्वेते भेदोपभेदैरनेकविधा भवन्ति।

---

१. भरतार्णवः, अध्यायः ३।

२. भरतार्णवः, अ० ४, श्लो० २८८-२८९, ३०१-३०४, ३३०।

एवं च नन्दिकेश्वरमतेन चतुर्दशधाः, मतान्तरेण च पञ्चधाः। एवं चैकोनविंशतिविधाः शिरोभेदा निरूपिता भरतार्णवे। ततश्च षट्त्रिंशद् दृष्टिभेदाश्चापि विवेचिताः सन्ति।

## नृत्यविवेचनम्

भारतीयनाट्यपरम्परायां संगीतस्य महत्त्वपूर्णा भूमिका वर्तते। संगीतमभिनयस्य जीवनाधायकं तत्त्वमस्ति। अत एवाचार्यनन्दिकेश्वरेण नाट्येन सह संगीतमपि विचारितम्। संगीतस्य तु महत्त्वं सर्वैरेवाचार्यैः स्वीकृतम्। न केवलं भारतीया एव, अपि तु पाश्चात्त्यविद्वांसोऽपि संगीतस्य महत्त्वं स्वीकुर्वन्ति। भारतीयपरम्परासंगीतस्यान्तर्गतं गीतस्य वाद्यस्य नृत्यस्य च प्रयोगं समर्थयति। यथा—

गीतं वाद्यं च नृत्यं च त्रंय संगीतमुच्यते।[१]

संगीतस्य प्रमुखतत्त्वं नृत्यमस्ति। नृत्यं विना संगीतस्यापूर्णतैव मन्यते। नृत्येन सह प्रयुज्यमानं गीतं वाद्यं च समधिकं मनो रञ्जयति। नाट्यशास्त्रानुसारं नाट्ये नृत्यस्य प्रयोगो भगवतः शङ्करस्य प्रेरणया सञ्जातः। भरतेन प्रयुक्तस्य 'त्रिपुरदाह'नाम्नो डिमस्य पूर्वरङ्गो नृत्येन हीनत्वात् 'शुद्ध' एवासीत्। भगवता शङ्करेण तद्गीत-वाद्ययुतस्य नृत्यस्य प्रयोगेण समलङ्कृत्य 'चित्र'रूपेण प्रस्तुतीकरणाय समाज्ञप्तः 'तण्डुः', यत्स भरताय नृत्यं शिक्षयतु।[२] तण्डुना प्रयुक्तं तन्नृत्यं 'ताण्डव'नाम्ना प्रथितम्। ताण्डवनृत्यं नानाप्रकारैः करणैरङ्गहारैश्च युक्तं भवति। अङ्गहारः करणं रेचकमिति सन्ति नृत्यसम्बन्धीनि तत्त्वानि नृत्ये ताल-लय-गीत-वाद्यानामपि सन्निवेश औचित्येन राजते।

## करणनिरूपणम्

नाट्यशास्त्रे प्रतिपादितं यत्समस्तानामेवाङ्गहाराणां निष्पत्तिः करणादेव जायतेऽतोऽङ्गहारविवेचनात् प्रागेव करणविवेचनमावश्यकमिति।[३] भरतार्णवेऽङ्गहारान्तर्गतं करणविवेचनमपि कृतम्। नृत्ये हस्तपादादीनां गतयः 'करण'व्यपदेशं लभन्ते।[४] प्रतिकरणे हस्तपादानां मुद्रारचना जायते। नाट्यशास्त्रेऽष्टोत्तरशतप्रकारकाणां करणानामुल्लेखो वर्तते। स्थानकम्-चारी-नृत्तहस्तादीनि सन्ति करणानां विभिन्नानि तत्त्वानि। भरतार्णवे विस्तृततया विचारितानि तत्त्वानीमानि।

---

१. संगीतरत्नाकरः, प्रथमाध्याये स्वरगताध्यायः, श्लो० २१।

२. नाट्यशास्त्रम् ४।१२-१८, बड़ौदासंस्करणम्।

३. सर्वेषामङ्गहाराणां निष्पत्तिः करणैर्यतः।

( नाट्यशास्त्रम् ४।२९ )

४. हस्तपादसमायोगो नृत्यस्य करणं भवेत्।

( नाट्यशास्त्रम् ४।३० )

## स्थानकम्

विद्यते 'स्थानकम्' करणानामेकं तत्त्वम्, नृत्ये स्थितेर्मुद्रास्थानकमुच्यते। हस्तपादानां स्थितयः करणमुच्यते। स्थितेर्मुद्रापि विद्यत एकविधा पादस्थितिरेव। अत एवोच्यते स्थानकं करणस्य तत्त्वमिति। भरतार्णवे द्वात्रिंशद्विधानि स्थानकानि प्रतिपादितानि।[१] यत्र च स्थितेर्विभिन्नानां मुद्राणां स्वरूपाणि मुद्राश्च विस्तृततया विवेचिताः। अत्र सप्तपुरुषजातीयाः, सप्त स्त्रीजातीयाः, अष्टादश च मिश्रजातीयाः सन्ति। नाट्यशास्त्रे षण्णां पुरुषजातीनां तिसृणाञ्च स्त्रीजातीनां समुल्लेखो वर्तते, नात्र मिश्रितजातयो वर्णिताः। 'भरतार्णवे' नृत्यवर्णनाय यासां स्थितीनां वर्णनं विद्यते तासां प्रतिपादनं नवमाध्याये विराजते। नृत्यर्थमतीवावश्यका इमाः। आसु या 'सप्तमस्थितिः' विद्यते तस्या वास्तविकाभिधान-परिज्ञाने काठिन्यं प्रतीयते, यतः केषुचित् स्थलेषु 'चान्द्रिक' इत्यभिधेया, अपरत्र 'चाण्डिक' इत्यभिधया च वर्णितैषा। सप्तस्थितीनां मूललेखकरूपेण सप्तदेव्यो मातरो वा परिगणिताः, यासां नामानीमानि प्रसिद्धानि—ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, इन्द्राणी, चामुण्डा चेति। अत एव सिध्यतीदं यच्चाण्डिकमिति नामैव समुपयुक्तम्, न तु चान्द्रिकमिति।

## चारीनिरूपणम्

'चारी' इत्यपि विद्यते करणानामेवैकं तत्त्वमिति। नृत्ये चास्य सविशेषं महत्त्व-मङ्गीकृतम्। भरतेन नाट्य-नृत्ययोरुभयोरपि कृते निरूपितं चार्या महत्त्वम्। नाट्यशास्त्रे कटिभ्यामुरुभ्यां जङ्घाभ्यां पादाभ्यां च विहितस्याभिनयस्य समानीकरणम् 'चारी' इति नाम्ना व्यपदिष्टम्।[२] भरतार्णवे नन्दिकेश्वरेण पादैकेन क्रियमाणस्याभिनयस्य चारीति व्यपदेशः कृतः।[३] चारीद्वारैवाङ्गहाराणां करणानां च रचना जायते। भरतनाट्यशास्त्रानुसारमेकपादेन क्रियमाणः पाद-प्रचारः 'चारी' ति व्यपदिश्यते। पादद्वयक्रियमाणा च चेष्टा करणमिति निर्दिश्यते। करणानां समायोगेन 'खण्डस्य', त्रयाणां चतुर्णां वा खण्डानां योगेन 'मण्डलस्य' च परिकल्पना क्रियते।[४] भरतार्णवे चाकाशचारी भूचारी चेति रीत्या वर्गद्वये

---

१. भरतार्णवः ५।३३३-३३८।

२. एवं पादस्य जङ्घाया उरोः कट्यास्तथैव च।
समानकरणे चेष्टा चारीति परिकीर्त्तिताः॥
(नाट्यशास्त्रम्, बड़ौदासंस्करणम १०।१)

३. यत्केवलेन पादेन नृतं सा चार्युदाहृता।
(भरतावर्णवः ८।५७१)

४. एकपादप्रचारो यः सा चारीत्यभिसंज्ञिता।
द्विपादक्रमणं यत्तु करणं नाम तद्भवेत्॥
करणानां समायोगः खण्ड इत्यभिधीयते।
खण्डैरित्रभिश्चतुर्भिर्वा संयुक्तैर्मण्डलं भवेत्॥
(नाट्यशास्त्रम्, बड़ौदासंस्करणम् १०।३-४)

विभागो विहितश्चार्याः। नाट्यशास्त्रे चाकाशचार्याः षोडशभेदाः, भूचार्याश्चापि षोडश-भेदाः संकलनेन द्वात्रिंशद् भेदा निरूपिताश्चार्याः। अभिनयदर्पणे तु केवलमष्टावेव चार्यो निर्दिष्टाः, न तत्राकाशचारी भूचारीति विभागो दृश्यते। भरतार्णवे चाकाशचारी भूचारीति भेदद्वयं प्रकल्पितम्। तत्राकाशचार्या नवधा भूचार्याश्च षोडशभेदा निरूपिताः। आकाश-चार्यामाकाशमभिलक्ष्य भूचार्यां च भुवमभिलक्ष्य प्रयोगो विधीयते। एतदतिरिक्तं भरतार्णवे चारीयुक्तस्य हस्तस्यापि निरूपणं कृतम्। भरतार्णवस्यानुसारं नृत्ये हस्तप्रचारस्य पाद-प्रचारस्य चोभयोरपि प्रयोगो विधीयते। अनयोः कदापि हस्तप्रचारस्य, कदाचन पाद-प्रचारस्य प्राधान्यं भवति।

नृत्तहस्ता अपि करणानां महत्त्वपूर्णानि तत्त्वानि सन्ति। करणेष्वेव नृत्तहस्तानां प्रयोगो विधीयते। नृत्तहस्तानां मुद्राणां परिज्ञानाय करणज्ञानमत्यावश्यकम्।

## रेचकः

'रेचकः' नृत्यस्य प्रमुखतत्त्वतां बिभर्ति। रेचकोऽङ्गस्य सम्बन्धिता चेष्टा वर्तते। असौ करणेभ्यश्चारीभ्यश्च पार्थक्यं वहति। रेचकस्य क्षेपणम्, पृथक्करणम्, नम्रीभवनं वा विद्यतेऽर्थः, हस्तपाद-कटि-ग्रीवाणां विभिन्नमुद्रासु सञ्चालनं रेचकपदवाच्यमस्ति। नाट्य-शास्त्रे पादरेचकः, कररेचकः, कटिरेचकः कण्ठरेचकश्चेति चत्वारो प्रकारा निरूपिताः।[१]

## तालविवेचनम्

'ताल'शब्दः 'तल'धातोर्निष्पद्यते, यस्यार्थो 'हस्ततल' इति वर्तते। भरतकोशे लिखितमस्ति यत् 'ता' इति शिवस्य 'ल' इति शक्तेश्च प्रतीकतां बिभर्ति। एवं शिवशक्ति-समायोगेन च तालस्योत्पत्तिर्भवति।[२] 'तालशब्दोऽयं गीतं वाद्यं नृत्यमिति संगीतस्य तिसृणामपि विद्यानां कृते लयात्मिकामाकृतिं वितनुते। भरतार्णवानुसारं द्रुत-लघु-गुरु-प्लुत-काकपद (हंसपद)-विरामा इति षडङ्गानि तालस्य प्रोक्तानि। एषु द्रुतस्यार्धमात्रा भवति। शास्त्रेऽस्याभिव्यक्तिर्व्योम—व्यञ्जन-विन्दुक-तारक-नयनवृत्तंजायते। लघोरेका मात्रा विद्यते। सरल-ह्रस्व-व्यापक-इषु-दारितानि सन्त्यस्य नामधेयान्यपराणि। गुरोर्मात्राद्वयं भवति। अस्यापरं नाम वक्रश्चन्द्रजन्मा च वर्तते। प्लुते सन्ति तिस्रो मात्राः। अस्यापरं नाम सामोद्भवः, त्र्यङ्कः, दीप्त इत्यपि वर्तते। हंसपदे भवन्ति चतस्रो मात्राः। इदं निःशब्दमप्यभि-धीयते। विरामो यति-चरणांघ्रिपद-त्रुटि-बन्धशब्दैरपि ज्ञायते।[३] तालेषु यतेः प्रयोगो द्रुतस्य लघोश्चानन्तरं भवति। एष द्रुतलघ्वोरग्रिमसोपानमभिधीयते। यतेः प्रयोगो तालस्य

---

१. पादरेचक एकः स्याद् द्वितीयः कटिरेचकः।
  कररेचकस्तृतीयस्तु चतुर्थः कण्ठरेचकः॥
  (नाट्यशास्त्रम्, बड़ोदासंस्करणम् ४।२४८)

२. "शिवशक्तिसमायोगात्तालनामाभिधीयते" (भरतकोषः, पृ० ८)।

३. भरतार्णवः ७।४३०-४३४।

साधु समापनाय भवति। द्रुतस्य लघोश्चार्द्धभागो यतिरिति निगद्यते।[१] अर्धद्रुतमर्धलघुरप्युच्यत एषः। केचिद् विद्वांसो द्रुतस्यानन्तरं लघोर्वानन्तरं प्रयुज्यमानमिममर्धद्रुतमेव वदन्ति। भरतार्णवेऽष्टोत्तरशततालाः निरूपिताः। नाट्यशास्त्रे तु नाष्टशततालाः प्रोक्ताः, तत्र गीतेर्वाद्यैश्च सम्बद्धास्तालाः। भरतार्णवे चेमे ताण्डवेन लास्येन च सम्बद्धाः। नृत्ये सङ्गीतापेक्षया तालस्यावश्यकता सविशेषा वर्तते।

## अङ्गहारविवेचनम्

आचार्यनन्दिकेश्वरेण भरतार्णवेऽङ्गहाराः सविस्तरं वर्णिताः। प्रयोगविधिश्चैषां नन्दिकेश्वराय (ताण्डवे) शिवेन निर्दिष्टः। नन्दिकेश्वरश्च भरतानशिक्षयत्। भरतार्णवेऽङ्गहाराणां निष्पत्तिरित्थं वर्णिता—

आश्चर्यशब्दवन्त्रैस्तत्तत्तालयोद्यतैः।
करणानां मेलनं स्यादङ्गहारनृतिक्रमः॥[२]

भरतार्णवेऽन्यमतेनापि निगदिताङ्गहाराणां निष्पत्तिः। तत्र केचन विचक्षणाः प्रातःकालीनकार्यक्रमे क्रियमाणं नृत्यमङ्गहारं निरूपयन्ति।[३] अपरे च विज्ञा अभिनयैकभागसमाप्तौ हाव-भावादियुताभिर्मुद्राभिः क्रियमाणं नृत्यमङ्गहारं वदन्ति।[४] भरतार्णवे नवधाङ्गहारा विवेचिताः। प्रत्येकस्याङ्गहारस्य सम्बन्धो रसेन योजितः, सौन्दर्यशास्त्रेणापि सम्बद्धा निरूपिता इमे। तालानां गतिविशेषवशादङ्गहारा द्वेधा विभजितुं शक्यन्ते। त्रयो वा भवन्तु पादप्रचारास्तत्र चत्वारो वा। प्रतिवर्गे षोडशाङ्गहारा भवन्ति। एवं सङ्कलनेन द्वात्रिंशद्विधा अङ्गहारा भवन्ति। भरतार्णवे तु ये नवाङ्गहाराः प्रदर्शितास्ते रसपरत्वाद्रससंख्यानुगततया प्रतीयन्ते। वस्तुत इमे विशेषा अपि भवितुं शक्यन्ते। प्रत्यङ्गहारे करणसंख्या निर्धारिता, करणानि चाङ्गहारान्तर्गतानि। नाट्यशास्त्रप्रभृतिग्रन्थेषु द्वात्रिंशद्विधा अङ्गहारा वर्णिताः। षोडश त्र्यस्रतालास्त्रिधा लयस्थितिसहिता निष्पाद्यन्ते। षोडशचतस्रतालाश्च चतुर्धा लयस्थितिभिस्सह निष्पाद्यन्ते। प्रत्येकाङ्गहाराणां नृत्यानां च चालनं निरन्तरं क्रियाशीलतां विधातुं स्थितिं प्रदर्शयितुं च ये ये वर्ण्यास्तालाः सन्ति, ते नाट्यशास्त्रे प्राच्यपुस्तकेषु च नोपलभ्यन्ते; किन्त्वेकस्मिन् हस्तलेखे ते सुरक्षिता लभ्यन्ते। देवेन्द्राचार्येण प्रणीतोऽयं

---

१. "लघुद्रुतयोश्चापि विरामः परियुज्यते" (भरतार्णवः ५।४३६)।

२. भरतार्णवः ९।५७९।

३. वदन्ति केचिद्विबुधा भरतार्णवविचक्षणाः।
प्रातर्नृतप्रकटनैरङ्गहारो विधीयते॥
(भरतार्णवः ९।५८०)

४. एवं वदन्ति च परे तयोरुत्पत्तिरिष्यते।
अर्थाभिनयमार्गेण सम्भूतो यो नृतिक्रमः॥
(भरतार्णवः ९।५८१)

हस्तलेखः 'सङ्गीतमुक्तावली'नाम्ना विराजते 'सरस्वतीमहल'नामके पुस्तकालये।[1] किन्तु भरतार्णवे येऽङ्गहारा दृष्टिगोचरा भवन्ति, ते सर्वथा विभिन्ना एवैतेभ्यः। भरतार्णवे वर्णितेष्वङ्गहारेषु विशिष्टहावभावानां प्रदर्शनं प्रत्येकरूपस्य सोद्देश्यप्रयोगश्चान्तर्निहितो वर्तते। एषां नामकरणमपि निश्चितवर्ण्यविषयस्य वर्ण्यरसस्य चाश्रयेण विहितं वर्तते। एषु 'ललित'-नाम्नोऽङ्गहारस्य यानि पञ्च रूपाणि सन्ति, तेषामुद्देश्यः शृङ्गाररसो वर्तते। एवं 'विक्रम'-नाम्नाङ्गहारस्य ये त्रयो विभागाः कृतास्ते वीररसं सूचयन्ति। 'कारुणिक'नाम्नोऽङ्गहारस्य यानि चत्वारि रूपाणि निर्दिष्टानि, तानि करुणरसेन सम्बद्धानि। विचित्राङ्गहारस्य रूपद्वय-मद्भुतेन सम्बद्धम्। एवं विकलाङ्गहारस्य रूपद्वयं हास्यरसजनकम्। एवमेव भीमाङ्गहारस्य रूपद्वयं भयानकरसम्, विकृताङ्गहारस्य रूपद्वयं बीभत्सरसम्, उग्रतराङ्गहारस्य रूपद्वयं रौद्ररसम् शान्तजस्य च रूपद्वयं शान्तरसं सूचयन्ति।[2] स्थितयोऽङ्गहाराश्च यद्यपि सामान्य-रूपेण निर्दिष्टाः, किन्तु जीवन एषां विशेषप्रभावो दृश्यते। योऽयमङ्गहारशब्दो नाट्यशास्त्रेऽ-न्येषु ग्रन्थेषु चोपलभ्यते, तस्यैका सीमा निर्धारिता विद्यते। यस्यां नृत्यस्याष्टानां नवानां दशानां तदधिकानां च व्यष्टीनामेवं परमशिवेन नृत्ये परीक्षितानामष्टोत्तरशतकरणानां च प्रतिपादनं दृश्यते। प्रतिकरणेषु स्थितीनां मिश्रणं हस्तपादानां सञ्चालनं शिरश्चालनं सोद्देश्यं दृष्टिपातनं च संयुज्यते। नृत्याभ्यासे करणानामावश्यकताऽनिवार्या वर्तते। एषां क्रियान्वितिदर्शनं मूर्त्तिकलासु जायते। आसु चिदम्बरे तञ्जौरप्रदेशे च विद्यमानानां मन्दि-राणां कला प्रसिद्धा[3]। एवमिदं कथयितुं शक्यते यन्नाट्यशास्त्रे ग्रन्थान्तरेषु च निर्दिष्टा। द्वात्रिंशदङ्गहारा भगवता शिवेन भरतार्णवे प्रोक्ताश्चाङ्गहारा भगवत्या पार्वत्या च प्रदत्ताः सन्ति। किन्तु केचिद् विद्वांसो भरतार्णवे वर्णितानङ्गहारानपि शिवेनैव दत्तान् मन्यन्ते।' वस्तुतो भरतार्णवे वर्णिता अङ्गहारा रसपराः सन्ति। नाट्ये निरूपितान् नवरसानभिलक्ष्येमे

---

१. 'संगीतमुक्तावली' नामक दो हस्तलेख एक ही लेखक के प्राप्त हुए हैं। उनमें प्रथम तो ताड़पत्र पर लिखित हैं जो विषय की सैद्धान्तिक रीतियों का प्रतिपादन करता है। दूसरा सामान्य कागज पर लिखित है जो सिद्धान्त की अपेक्षा प्रयोगात्मक विवरण प्रस्तुत करता है। यह ताल और अङ्गहार विषय पर एकमात्र पुस्तक है।'

( भरतार्णव की भूमिका, पृष्ठ १२ से अनूदित )

२. भरतार्णवः ९।५४९–'५७७.

३. 'चिदम्बरम्' के मन्दिर में नटराज मन्दिर के पूर्व और पश्चिम के गोपुरों पर चट्टानों को काटकर 'करण' बनाये गये हैं। प्रत्येक चित्र के नीचे नाट्यशास्त्र के तत्सम्बन्धी श्लोक भी दिये गये हैं। इसी प्रकार तञ्जौर के मन्दिर में एक दूसरी कृति है। ··· इसकी ड्योढ़ी में चारों ओर करण खोदे गये हैं, जिनकी संख्या लगभग इक्यासी है। उसके अतिरिक्त सत्ताइस करण और भी हैं, किन्तु वे अपने रूप में उत्तीर्ण नहीं हैं। इन स्थितियों में प्रत्येक के चार हाथ हैं जो शिव के नृत्य को सूचित करते हैं। प्रत्येक स्थिति लगभग नौ फुट की हैं। नाट्य के वर्णन में ये चिदम्बरम् के मन्दिर से भी बढ़कर है।

( भरतार्णव की भूमिका स० ३२८ )

नवाङ्गहारा विवेचिता नृत्यरूपता चैषां मानिता। नाट्यशास्त्रे च वर्णनमेषां केनाप्यन्येनोद्देश्येन कृतं प्रतिभाति।

## सप्तलास्यनिरूपणम्

नाट्यशास्त्रे ताण्डवलास्यभेदेन द्विधा नृत्यनिरूपणं कृतम्। ताण्डवं शिवेन लास्यं च पार्वत्या सह सम्बद्धम्। ताण्डवलास्ययोरुद्भावनायां शिवपार्वत्योर्द्वयोरेव योगदानमभूत्। भरतेन लास्यस्य दशधोल्लेखो व्यधायि।[१] भरतार्णवे नृत्यरूपाणां सप्तसमूहरूपाणां या वर्णना विहिता सा सप्तलास्यपदवाच्या विद्यते। एतेषां संख्याः सप्त निर्दिष्टाः—

शुद्ध-देशी-पेरुणी-प्रेंखणी-कुण्डली-दण्डक-कलशाश्चेति।

शुद्धनाट्ये सप्तविधास्ताण्डवाः सम्मिलितीकृताः।[२] एषु प्रत्येकस्ताण्डवो गतिकरणचारीतालैर्युक्तो भवति। 'गतिः' चलनस्य स्थितेश्च संयोगरूपो विद्यते। भरतार्णवे शुद्धनाट्याय षड् गतयो निर्दिष्टाः।[३] एषु दक्षिणभ्रमणं नाम ताण्डवो त्रिगतिभिर्मिश्रीभूतम्। शेषेषु च ताण्डवेषु द्वयोर्मध्यगामिनी गतिरेका भवति। एवं षट्सु ताण्डवेषु तिस्रो गतयो भवन्ति। गतिविरामे च करणानि प्रयुज्यन्ते। हस्तपादसञ्चालनक्रियायोगः करणमिति व्यपदिश्यते। करणान्ते च चारीणां प्रयोगो निर्दिष्टः। भरतार्णवे षट् करणानि चार्यश्च निर्दिश्यन्ते।[४]

---

१. "लास्यं दशविधं ह्येतदङ्गनिर्देशलक्षणम्"।
(नाट्यशास्त्रम्, बड़ौदा सं० १६।१२०)

२. दक्षिणभ्रमणं पूर्वं वामस्य भ्रमणं पुनः।
लीलाभ्रमणमेव स्याद्भुजङ्गभ्रमणं ततः॥
विद्युद्भ्रमणमेव स्याल्लताभ्रमणमेव च।
ऊर्ध्वताण्डवमित्याहुः सप्तधा ताण्डवक्रमः॥
( भरतार्णवः १३।७०९–७१० )

३. मयूरगतिरादौ स्याद्राजहंसगतिस्तथा।
कृष्णसारगतिः पश्चात्कीर्त्तिता भरतादिभिः॥
गजस्य गतिराख्याता तदनन्तरमेव च।
सिंहस्य च गतिः कार्या ताण्डवं परिकल्पितम्॥
( भरतार्णवः १३।७१२–७१३ )

४. मयूरललिते चारीं समपादाभिधानकम्।
हरिणप्लुतके चारीं स्थितावर्तां तथोदिताम्॥
गङ्गावतरणं चारीमूरूद्वृत्ताभिधानकाम्।
करिहस्ताख्यकरणं चारीं तां वक्त्रबन्धकाम्॥
सिंहविक्रीडितं चारीं स्यंदितेति प्रकीर्त्तिताम्।
कीरभूषणकं चारीमुत्स्यन्दितप्रकीर्त्तिताम्॥
( भरतार्णवः १३।७१८–७२० )

प्रत्येकताण्डवस्य तालयुक्तत्वमनुनिर्दिष्टम् । तालाय च वाद्यनियमाः समुल्लिखिताः । एवं 'दक्षिणभ्रमण'नामकं शुद्धनाम्न्यं तिसृभिर्गतिभिस्त्रिभिः करणैस्तिसृभिश्चारीभिस्त्रिभिस्तालैश्च मिश्रितं भवति । शिष्टेषु षट्सु ताण्डवेषु द्वयोर्मध्ये एका गतिरेकं करणमेका चारी एकस्तालश्च वर्तते । एवं शुद्धनाम्न्यस्य सप्तताण्डवेषु षड् गतयः, षट् करणानि, षट् चार्यः, षट् तालाश्च निर्दिष्टाः । देशीनाम्न्ये तु पञ्चधा ताण्डवाः सम्मिलिताः[१] । एषु प्रत्येक एव ताण्डवो गतिकरणचारीतालैर्युज्यते । भरतार्णवे देशीनाम्न्याय पञ्चगतयो निर्दिष्टाः[२] । गत्यन्ते करण-चारीणां प्रयोगो भवति । अतः पञ्चभ्यो देशीताण्डवेभ्यः पञ्च करणानि, पञ्चैव चार्यो निर्दिष्टाः[३] । भरतार्णवे निर्दिष्टानां निकुञ्चितादिपञ्चप्रकाराणां देशीताण्डवानां कृते पञ्च गतयः, पञ्च करणानि, पञ्च चार्यः, पञ्च तालाश्च निर्दिष्टाः, तथा तेषां प्रयोगविधयोऽपि निर्दिष्टाः ।

सप्तलास्येषु शुद्धदेशीनाम्न्याभ्यां भिन्नाः पेरूणी-प्रेङ्खणी-कुण्डली-दण्डिक-कलशाश्च पञ्च लास्याः क्रमशो ब्रह्म-सरस्वती-विष्णु-लक्ष्मीभ्यश्च प्रकाशिताः सन्ति । एषु पैरुण्या ब्रह्मणः, प्रेङ्खण्याः सरस्वत्याः, कुण्डल्या विष्णोः, दण्डिककलशयोर्महालक्ष्म्याः समुत्पत्तिर्निर्दिष्टा भरतार्णवे[४] । पेरुण्यादिकलशपर्यन्तपरिगणिताः पञ्चलास्याः शब्दस्य ध्वनिना सह नृत्यन्ते, अन्ते च करणचारीभ्यां योजनां परिभावयेत । भरतार्णवे पञ्चलास्यानां कृते हेरम्ब-शंख-नारायण-विष्णुक्रान्त-गरुडप्लुतनामानि पञ्च करणानि; एवमस्पन्दित-समोत्सारित-मण्डली-मत्तलिका-अध्यर्चिका-एडकाक्रीडितेति पञ्च चार्यश्च निर्दिष्टाः सन्ति । भरतार्णवा-

१. निकुञ्चितं कुञ्चितं च सम्यगाकुञ्चितं तथा ।
पार्श्वकुञ्चितमेव स्यादर्धकुञ्चितकं तथा ॥
( भरतार्णवः १३।७२१-७२२ )

२. केकिनीमतिरादौ स्याद् राजहंसीगतिस्तथा ।
हरिणीगतिराख्याता करिणीगतिरेव च ।
सारिकागतिराख्याता······················ ॥
( भर र्णवः १३।७२३-७२४ )

३. मान्मथं करणं चारीं नाम्ना चापगताभिधाम् ।
सौन्दरं करणं चारीं विच्यवामपि तादृशीम् ॥
वारुणं करणं चारीं नाम्नाप्यङ्कितसंज्ञकाम् ।
गजविक्रीडितं चारीं जनितामपि कीर्तिताम् ।
चान्द्रं च करणं चारीं शकटाख्यां तथेरिताम् ॥
( भरतार्णवः १३।७२६-२८ )

४. प्रेरुणीं पद्मसम्भूतः पेङ्खणीं शारदापि च ।
कुण्डलीनाट्यकलनां कलयामास माधवः ।
दण्डिकाकलशे नाट्ये ननर्त कमलालया ॥
( भरतार्णवः १३।७६०-७६१ )

नुसारं पैरुणीतः कलशपर्यन्तानां पञ्चलास्यानां सम्मिश्रणश्चारीदर्पणपदभाग् भवति। सप्तलास्येषु गति-करणचारीयुक्तो यो देशी शुद्धश्च ताण्डवो निर्दिष्टस्तस्य संयोगश्चारी-भूषणपदाभिधेयो विद्यते[१]।

एवमुच्यते—यद्भरतार्णवे यो द्वौ ताण्डवौ निर्दिष्टौ, तयोः शुद्धनाट्यस्य शिवेन देशीनाट्यस्य च पार्वत्या विहितोऽभिनयः। अत एव नन्दिकेश्वरेणानयोरुत्पत्तिराभ्यां शिवपार्वतीभ्यां प्रतिपादिता—शुद्धनाट्यं शिवश्चक्रे देशिनीं पार्वती तथा[२]।

भरतार्णवे ताण्डवस्य लास्यस्य च प्रयोगः स्त्रीपुरुषसंयोगनिर्वाह्ये नृत्ये कृतः प्रतिभाति। एषां समष्टिः सप्तलास्यपदाभिधेया भवति। प्रारम्भे निर्दिष्टयोर्द्वयोर्देशी-शुद्ध-नाट्ययोर्मौलिकतत्त्वं ताण्डवनाम्नाभिहितम्। शेषाणि च पैरुणी-प्रभृतीनि लास्यतया परिगणितानि।

## शृङ्गनाट्यम्

भरतार्णवे निर्दिष्टमेतद् यद् द्विविधानां चारीणामङ्गहाराणां स्थानकानां च संयोगेन यन्नृत्यं प्रयुज्यते, तदेव शृङ्गनाट्यं निगद्यते[३]। अस्य शृङ्गनाट्यपदाभिधेयत्वे हेतुरयं यत् कदापि वसन्ततौं भगवता शिवेन मनोरमोद्यानसुशोभिते कैलासगिरेः रम्ये शृङ्गे पार्वतीप्रार्थनया नृत्यप्रयोगोऽयं विहितः। शिवेन च स्थानकैः सार्धं तालध्वनीनामनुसारेण नर्तनं विहितम्। नृत्येऽस्मिन्नादावाकाशचारीणां मध्येऽङ्गहाराणां समवसाने च भूचारीणां प्रयोगो भवति[४]। भरतार्णवे शृङ्गनाट्यस्य नवधा भेदोपवर्णिताः सन्ति।

## पुष्पाञ्जलिः

अभिनयदर्पणानुसारं रङ्गपूजां पुष्पाञ्जलिविधिं च सम्पाद्य नृत्यं समारभेदित्युच्यते। भरतार्णवे सप्तलास्यादौ 'पुष्पाञ्जलिः' प्रयोक्तव्य इत्युक्तम्। नन्दिकेश्वरेण दैविक-मानुष-भेदेन द्वैविध्यमुक्तं पुष्पाञ्जलेः। तयोर्दैविके प्रथमं पुष्पाञ्जलिः प्रस्तूयते, पश्चाच्च मौलिक-विषयानुसारं नृत्यं प्रयुज्यते। मानुषे तु पुष्पाञ्जलिविधेरनन्तरं 'मुखचालि'नामकं नृत्यं प्रस्तूयते। शृङ्गनाट्ये च द्वयोरनयोः प्रयोगः प्रारम्भे भवति। तत्र दैविकं दिव्यपुरुषैः, मानुषं च मानवैः प्रस्तूयते। यदि दैविकं कश्चिद् राजा प्रयोक्तुमर्हति, तदाऽङ्गपूजां विधाय तत्प्रस्तूयेत। मानुषे च सर्वदा शिवपार्वत्योः पूजां विधाय सप्तलास्यादिनृत्यं समारभेत्। नृत्यविधेर्निर्विघ्नसमाप्तिहेतवे प्रयोगोऽयं विधीयते[५]।

---

१. भरतार्णवः ७५२-७५६।
२. तदेव १३।७६०।
३. चारीद्वयैरङ्गहारैः स्थानकानां तु मेलनात्।
शृङ्गनाट्यमिदं सर्वे वदन्ति सुमते बुधाः॥
(भरतार्णवः ११।६३७)
४. भरतार्णवः १२।
५. भरतार्णवः १५।८८९-८९७।

# गजायुर्वेदपरिचयः

हिन्दकेसरी शास्त्री

अनुसन्धाता वाराणसेयसंस्कृतविश्वविद्यालयः

संस्कृतभाषायामुपनिबद्धासु विद्यासु सन्त्यनेके विषया एवंविधा येऽद्यापि नान्यत्रोपलभ्यन्ते। प्रायो विद्वांसस्त्वेवंविचारपरा यत् संस्कृतभाषायां यत्किमप्यासीत् तद्गृहीतमेव, यथा संस्कृते निबद्धा गणितविद्या अद्य बालावस्थापन्नैव प्रतिभाति, एवमन्येऽपि विज्ञानायुर्वेदादयो विषयाः, अतस्तेषामध्ययनाय संस्कृतभाषा नाध्येया। संस्कृतभाषा केवलं शास्त्रीया भाषा, अतो ग्रीकलैटिनभाषावत् केवलं भाषात्वेनैवाध्येया, अथवा काकदन्तपरीक्षावत्। अत्र विषय इदं संस्कृतस्य, अत्र च विद्यायामयं संस्कृतभाषायाः योग इत्येवाधुनिकी विचारचर्चा।

अत्र निबन्धेऽस्माभिः परिचाय्यमानो गजायुर्वेदो न तादृशो विषयः, यो हि सर्वोऽप्यन्यैर्गृहीतः स्यात्, येन च संस्कृतभाषायाः कोशो रिक्तो दृश्येत। अयं च विषयो बालावस्थायामित्यपि न वक्तुं शक्यः, यतो हि कस्यामपि भाषायां 'पालकाप्य' सदृशः सर्वाङ्गपूर्णो ग्रन्थोऽद्यावधि न केनापि निर्मित इति वयं सडिण्डिमघोषं वक्तुं प्रभवामः। अद्यापि संस्कृतभाषागर्भे सन्त्येतादृशा विषया यानियं जगत्कल्याणाय दातुं प्रभवति, यत्पूर्वं दत्तं तत्तु दत्तमेव, तस्य चर्चया तु पुण्यनाश एव स्यात्।

गजस्तावत् स्थलचारिषु जन्तुषु विशालतमो महाशक्तिश्च। स चायमद्य भारतीयेषु वनेष्वफ्रीकारण्येषु चावशिष्टः। पुरा खलु पृथिव्या बहुषु वनेषु गजानां स्थितिरासीदित्यनेकत्रोपलब्धैः प्रस्तरभूतैर्गजास्थिभिर्निर्णीयते। स च पूर्वतनो गजोऽमुष्माद् गजाद् द्विगुणाकार इत्यप्यस्थ्नामाकारेणैव सिध्यति। स च द्विगुणाकारो हस्ती भारतीयानां गजानां पूर्वज इत्यप्याकारेणैव निश्चिनुमः[१]। अस्यास्थिपञ्जरं रूसदेशे लेनिनग्रादनामके स्थाने संग्रहालये सुरक्षितमास्ते। पुरा भारत एव बहवो गजानां जातय आसन्, किन्तु कालक्रमाद् गजानां शरीरे लाघवम्, वनानामुच्छेदाद् बहूनां जातीनां नाश एव समजनि। अद्य पृथिव्यां केवलमेको भारतीयो गजवंशः, द्वितीयश्चाफ्रीकादेशीयः। यद्यपि अफ्रीकादेशीयो गजो विशालकायो बलवांश्च, तथापि न स भारतीयगजवद्दर्शनीयो भवति।

इदमपि तु वैचित्र्यमेव यद् वने निवसतां गजानां व्याधयो न जायन्ते। यथेच्छाहारविहारैस्तेषां सर्वदैव धातुसाम्यं तिष्ठति, आहारे आचारे च वैषम्याभावाद् गजा वनेषु

१. जन्तुजगत, पृ० १३४।

निरामयाः। भगवता पालकाप्येन हस्तिभिः सार्द्धं वने विचरता केवलं पञ्चदशैव मृत्यु-कारणानि दृष्टानि—

पर्वतात् पतनं पङ्को विषवल्ली जराऽनलः।
कूपः प्रतिगजो ग्राहो विद्युल्लब्धो भुजङ्गमः॥
अलद्रुमस्तथा व्याडो[1] बाल्ये मातुर्विसर्जनम्।
दशभिः पञ्चभिश्चैव हेतुभिर्वारणा वने॥
म्रियन्ते नहि नागानां त्रिस्थूणाज्जायते भयम्।[2]

त एव गजा यदारण्याद् ग्राममानीयन्ते, तदा आहारविहारयोर्वैषम्यात्, अशयनात्, दुःखशयनात्, धेनुकानां वियोगात्, वनानां स्मरन्तो व्याधियुक्ता भवन्ति। मध्ये च राज्ञा रोमपादेन पृष्टो भगवान् पालकाप्यो निजगाद यद् वने गजा मृत्तिकामुपभुज्यैव बलवन्तो नीरोगाश्च, यदि च ग्रामे समानीता गजा मृत्तिकां खादन्ति, तदा ते व्याधिना पीड्यन्ते[3]। अन्यत्रापि पालकाप्येनेदमेवोक्तं यद् ग्रामे समानीतानां गजानां स्निग्धान्नपानैरग्निर्मन्दो भवति। इदमेव कारणं यद् गजा वने मृत्तिकया तृणैरेव पुष्यन्ति, परन्तु ग्रामेषु बहुना घृतान्नेन स्वभावतो नीरुजा अपि गजा मनुष्यकृतबन्धनाद् रोगाननुभवन्ति, तेषामेव चिकित्सार्थ-मृषिभिर्बहुधा प्रणीतो गजायुर्वेदः।

## गजायुर्वेदः संस्कृतभाषायामेव

यद्यप्यफ्रीकाद्वीपे गजा उपलभ्यन्ते, प्राक् चान्यत्राप्यासन्, किन्तु गजानां पालनं शिक्षणं सेनायां स्थानं भारतीया एव जानन्ति स्म, अन्येषां देशानां युद्धेष्वश्वानां सेना श्रूयते, गजसेना केवलं भारत एव, अतः स्वाभाविकमेतद् यद् गजायुर्वेदः संस्कृतभाषायामेव स्यात्। अश्वा अरबदेशेऽपि भवन्ति, अतो अरबदेशीयभाषायामश्वायुर्वेदो भवेन्नाम, किन्तु गजायुर्वेदस्तु नान्यत्र। तदिदं गजशास्त्रं विस्तीर्णमासीत्, अद्य चाल्पीयानेवांशोऽवशिष्टः, स एव प्रयुक्तः सन् महाकारं धारयेदिति विश्वसिमः। न चास्य शास्त्रस्यान्यैर्मानवचिकित्सा-शास्त्रैर्गतार्थता, गजानां भिन्नप्रकृतिकत्वात्। यद्यपि युक्तिकल्पतरौ भोजराजेन[4]—

ये व्याधयो नराणां स्युस्ते गजानामपि स्मृताः।
चिकित्सापि तथा तेषां मात्रा चैव गरीयसी॥

इत्युक्तम्, किन्तु यथा गजचिकित्सको भगवान् पालकाप्य आह तेन गजेषु वैचित्र्यं सिध्यति, यथा—

अन्नसात्म्या हि पुरुषास्तृणसात्म्या मतङ्गजाः[5]।

---

१. व्याडो हिंस्रपशुरिति त्रिकाण्डशेषे पृ० ४२।
२. पालकाप्यस्य हस्त्यायुर्वेदः १।३।१४।
३. पालकाप्यम् २१५६।
४. युक्तिकल्पतरुः, गजयुक्तिः १३५।
५, हस्त्यायुर्वेदः ४।१६।३६।

एवं ह्यन्तःस्वेदोऽपि गजानां वैशिष्ट्यम्—

यथा हिमवतः श्वभ्रमार्गादायाति वै जलम् ।
सन्तापेन मुखादेवं स्वेदः स्रवति दन्तिनाम् ॥[1]

एवं ह्यन्तर्मुष्कता, जिह्वापरिवृत्तिः, करः, आकृतिः, मदनाड्यश्च एभिर्विशेषैर्विशिष्टोऽपि गजोऽन्यैः प्राणिभिर्भिद्यते, अतो भिन्न एव चिकित्सक आवश्यकः ।

## गजायुर्वेदप्रवक्तारः

पालकाप्यः—अयं हि भगवान् पालकाप्यो गजायुर्वेदस्य प्रथम आचार्यः, इदञ्च पालकाप्यस्य जन्मकथां विलोक्य निश्चेतुं शक्यम् । इयं कथा पालकाप्यग्रन्थे, अन्यत्र च मातङ्गलीलादिग्रन्थेषु निबद्धा, तत एवोद्धृता । तथा च भगवतः पालकाप्यस्य जन्म हस्तिनीमुखात् श्रूयते । इयं च हस्तिनी वसुवंशायानां क्षत्रियाणां गुणवतीनाम्नी कन्याऽऽसीत् । सेयं मतङ्गमुनेः शापात् करेणुः सञ्जाता । सा च सामगायननामधेयस्य मुनेर्मूत्रपानाद् मुखादेव पुत्रं जनयामास । स च बालो हस्तियूथे विचरन् वृद्धिं लेभे । अस्य च नाम सामगायन एव पाल इति चकार, काप्य इति गोत्रनाम । इयं कथा सत्यासत्या वा या कापि भवतु, किन्तु निश्चितमेवैतद् यद् गजानां सूक्ष्मेक्षिकयैतादृशं वर्णनं तदैव सम्भवति, यदि केनचिद् बहूनि वर्षाणि वनेषु गजयूथानां विविधाश्चेष्टाः, लीला दृष्टाः स्युः; तेषां दिनचर्या, रात्रिचर्या, ऋतुचर्या गजवद् वनेचरीभूयैव दृष्टा भवेत् । पालकाप्यस्य सर्वमेतत् विदितम्, यथा—

समृद्धोऽहमतः सात्म्यं सुखं दुःखं च हस्तिनाम् ।
जानामि भक्ष्याभक्ष्यं च तथैवेङ्गितबृंहितम् ॥
यदा यच्च निषेवन्ते प्रतिकार्यं च येन यत् ।
अरण्ये कुर्वते नागास्तत् सर्वं विदितं मम ॥[2]

काप्य इति गोत्रनाम । अत्रेदं वेदितव्यं यत् 'कपि'शब्दो गजपर्यायोऽपि दृश्यते[3], तेनैव च यथा गर्गशब्दात् गार्ग्यो भवति । एवं कपिशब्दात् काप्य इति, पाणिनेर्गर्गादिगणे काप्यशब्दः कश्चनाङ्गिरसस्य कापस्य नाम । स चायमेवान्यो वेति न वक्तुं प्रभवामः । काप्य इति नाम्ना मुनेः कश्चन हस्तिभिः सम्बन्धः । 'करेणुभूः' इदमपि नाम अनेनैतिह्येन सम्बद्धं प्रतिभाति । अन्यत्र च शास्त्रेषु 'पालकः, काप्यः' इति नामद्वयं शास्त्रकारैः स्मर्यते । अत्र नामसम्बन्धे सुनीतिकुमारचटर्जीमहोदयानां वर्तते एवं विचारो[4] यत् पालकाप्य इति नाम्नि

---

१. हरिहरचतुरङ्गम्, गजपरिच्छेदः ।
२. हस्त्यायुर्वेदः १।१।१६४-६५ ।
३. भट्टिकाव्यम् ९।११ "कपेस्त्रासिसुर्दानात्" ।
संस्कृत-हिन्दीकोश—वामनशिवराम आप्टे ।
४. प्रेमी अभिनन्दन ग्रन्थ—डॉ० सुनीतिकुमारचटर्जीमहोदयानां लेखः—'भारतीय आर्यभाषाओं में बहुभाषिता' ।

पाल इति पदं काप्य इति च द्वयमपि गजवाचकम्, यथा शालिहोत्रशब्दे शालिशब्दोऽश्वस्य वाचकः, होत्रशब्दोऽपि भाषान्तरे घोटकवाचकः। इयं कल्पना शालिहोत्रशब्दे तु समीचीना प्रतिभाति, किन्तु पालकाप्ये तु दूरारूढैव। अत्र पालशब्दो द्रविडभाषायां हस्तिनो हस्तिदन्तानां च पर्यायः, किन्तु बहुशो दृष्टेषु द्रविडभाषाकोशेषु पालशब्दो गजवाचक इति न दृष्टमस्माभिः, केवलं पीलुशब्दः संस्कृतभाषायां गजवाचकः, तमाश्रित्य कल्पनादूरारूढैव। काप्य इति गजसम्बन्धाद् गोत्रनाम अत्र चटर्जीमहोदयैः स्मारिता वयमिति कृतज्ञतां ज्ञापयामः।

## आदिमः प्रवक्ता

प्रसिद्धिरेषा यत् पालकाप्य एव प्रथमो गजायुर्वेदप्रवक्ता, उक्तमपि तदीये ग्रन्थे—

स्वयम्भूः प्राग् ददौ यस्मै गजायुर्वेदमुत्तमम्।[१]

सत्यप्यस्मिन् श्लोके पालकाप्यग्रन्थे एवैका भिन्नापि परम्परास्य शास्त्रस्य श्रूयते।[२] पालकाप्यग्रन्थे एवानेकेषामाचार्याणां मतानि संगृहीतानि सन्ति, तेषां प्रामुख्येण काश्यपः, याज्ञवल्क्यः, गोतमः, राजपुत्रः, अरिमेदिः, हस्तिचारी, गार्ग्यः, अग्निवेशः, भरद्वाज इमानि नामानि सन्ति।[३] अन्यत्र च पूर्वाचार्या इति कृत्वा पूर्वाचार्याणामुल्लेखः, अन्यत्र च केचिदित्युक्त्वा, अतः पालकाप्य एव गजायुर्वेदस्य प्रथमवक्तेति तु विवादग्रस्तमाभाति। मत्स्यपुराणोक्तदिशा[४] गजशास्त्रे प्रसिद्धो राजपुत्रो राज्ञश्चन्द्रस्य पुत्रो बुध एव हस्तिशास्त्रप्रवर्तकः। अस्य च राजपुत्रीयं नाम गजायुर्वेदपुस्तकमासीत्। इति तु सत्यं यदद्य सर्वाङ्गपूर्णो गजायुर्वेदः पालकाप्यस्यैव वर्तते, अन्येषां च ग्रन्थेषु तादृशी पूर्णता नास्ति, अतः सत्स्वप्यन्येषु गजायुर्वेदप्रणेतृषु पालकाप्यस्य प्रधानत्वेन प्राथम्यम्। अयं च भगवान् रामायणे प्रसिद्धस्य राज्ञो रोमपादस्य समये बभूव, तस्मा एवासौ गजायुर्वेदं प्रोक्तवान्, अतो रामायणकालिक एव पालकाप्य इति वक्तुं शक्यते।

व्यासः—व्यासस्य गजायुर्वेदमधिकृत्य कस्यचन स्वतन्त्रग्रन्थस्य पाण्डुलिपिस्तञ्जौरपुस्तकालये वर्तते। ब्रह्माण्डपुराणे, अग्निपुराणे, गरुडपुराणे चाध्यायमात्रम्, अन्यत्र मत्स्य-

---

१. हस्त्यायुर्वेदः १।१।१४५।

२. तदेव ३।१२।१२

ब्रह्मशास्त्रमिदं प्राह पूर्वमेव प्रजापते।
प्रजापतिरथेन्द्राय सोऽश्विभ्यां पाकशासनः॥
अश्विनौ चापि तौ देवावृषिभ्यः प्रत्यभाषताम्।

३. तत्रैव ३।८ अध्याये।

४. मत्स्यपुराणम् २४।२-३।

पुराणादौ महाभारते च विषयोऽयं यत्र तत्र विकीर्णः। गोदावरमिश्रेण च हरिहरचतुरङ्ग-नामके ग्रन्थे[1] महाभारतीयमेकं मतमुद्धृतम्, गजशास्त्रेऽपि वैयासिकस्य इत्युल्लेखः।[2]

**शुक्राचार्यः**—अयमपि प्राचीन आचार्यः। केवलं शुक्रनीतिनामकोऽस्य ग्रन्थः, तस्मिन्नेव प्रसङ्गप्राप्तं किञ्चिल्लक्षणादिकमुक्तम्, अन्येषु पुस्तकेषु शुक्राचार्यमतं न लभ्यते, चाणक्यस्यापीदृश्येव गतिः।

**नीलकण्ठः**—अयं हि मातङ्गलीलाग्रन्थप्रणेता। अस्य ग्रन्थस्य केरलेषु प्रचारः। तेन सम्भाव्यतेऽयमपि केरलीय एव, समयस्त्वस्यानिर्णीत एव।

**भोजराजः**—युक्तिकल्पतरुग्रन्थप्रणेता स एव सर्वशास्त्रेष्वप्रतिहतबुद्धिर्धाराधीशो भोजः। अत्र चानेके विषयाः संगृहीताः सन्ति।

**गोदावरमिश्रः**—अयं हि षोडश्यामीशवीयशताब्द्यां कलिङ्गनरेशस्य गजपतिप्रताप-रुद्रस्य मन्त्री गुरुश्चासीत्। अयं हि हरिहरचतुरङ्गनामधेयस्य ग्रन्थस्य प्रणेता। अस्य कृतौ यादृशः संग्रहः स ऋते भोजराजस्य युक्तिकल्पतरुग्रन्थं नान्यत्रोपलभ्यते, भोजराजग्रन्थे च बहवो विषयाः संक्षेपेणैव संगृहीताः, अत्र च पञ्चषा एव विषयाः, किन्तु ते सविस्तरं सुस्पष्टं च प्रतिपादिताः सन्ति।

अन्य आचार्या येषां ग्रन्था नोपलब्धाः, केवलं मतानि सन्ति, तेषामपि नामोल्लेख आवश्यक एव। तत्र पूनानगरात् प्रकाशमागते पालकप्यस्य गजायुर्वेदशास्त्रे[3]राज्ञो रोमपादस्य सभामण्डपे प्रायः सर्वेषामेव ऋषीणामुल्लेखः, तञ्जौरनगरात् प्रकाशिते ग्रन्थे स राजा यान् ददर्श तेषां नामानि—

गौतमञ्चाग्निवेश्यं च राजपुत्रं च शौनकम्।
कौशिपुत्रं नरं काप्यं रैभ्यं चैव बृहस्पतिम्॥
गङ्गायनं च गार्ग्यं च जाबालिं च पराशरम्।
याज्ञवल्क्यं हिरण्याक्षं भृगुमाङ्गिरसं तथा॥[6]

एतेषु राजपुत्राग्निवेश्यबृहस्पतिगार्ग्ययाज्ञवल्क्यानां गजायुर्वेदे मतानि सन्ति, अतस्तेषां ग्रन्थकर्तृत्वं निश्चितमेव। पालकाप्यस्य गजायुर्वेदे[4] च अरिमेदकाश्यपयोरपि नामोल्लेखः। अयमरिमेद आचार्य एव पालकाप्यग्रन्थे[5] 'अरिमेदि'पदद्वारा स्मृतः। काश्यपमतमपि तत्रैव कौमारभृत्यचिकित्सायां काश्यपसंहिताया उपलभ्यत एव। एकोऽन्य आचार्यः, यो

१. हरिहरचतुरङ्गे १।६८८—
इत्युवाच कथं व्यासो भगवान् भीष्मपर्वणि।
२. गजशास्त्रं तञ्जौरतः प्रकाशितम्, पृ० ७०।
३. हस्त्यायुर्वेदे १।१ अध्याये।
४. गजशास्त्रे पालकाप्यचरित्रम् ७।८।
५. हस्त्यायुर्वेदे १।१ अध्याये।
६. तत्रैव ३।८।३०१।

रोमपादस्य स्थानमण्डपे नासीत्, स भगवान् हस्तिचारी इति सबहुमानं स्मर्यते[१]। पालकाप्यगजायुर्वेदे[२]—

निश्चित्य बुद्धौ भगवान् गजानामाह गौतमः ।

अत्र गौतमबुद्धशब्देन बौद्धमतप्रवर्तकस्य सन्देहो भवति, किन्तु हरिहरचतुरङ्ग उद्धृतमिदमेव पद्यं सन्देहं निराकरोति—

निश्चित्य बुद्ध्या भगवान् गजानामाह गौतमः ।[3]

एवं पूर्वग्रन्थे च लेखकस्य त्रुटिः सम्भाव्यते ।

**वैशम्पायनः**—अयमपि गजायुर्वेदप्रवक्तेति गजशास्त्रेऽस्योल्लेखाद् ज्ञायते ।[४]

**लोमपादः**—रोमपाद एव लोमपादः, तस्य च सूत्राण्यासन्, अत एवास्य सूत्रकार इति विशेषणं ब्रह्माण्डपुराणे,[५] महाभारते च गजसूत्राणामुल्लेखः[६] ।

**मृगशर्मा**—अस्याचार्यस्य नामोल्लेखः श्रीसुब्रह्मण्यशास्त्रिभिर्गजशास्त्रभूमिकायां कृतः। अस्यान्यत्र नामास्माभिर्न दृष्टम् । अत्र संक्षेपतस्तेषां मुद्रितग्रन्थानामपि परिचय आवश्यकः, यानधिकृत्य वयं किञ्चिद् वक्तुं प्रभवामः ।

**हस्त्यायुर्वेदः**—अयं ग्रन्थो हि पालकाप्यप्रणीतः पूनानगरे प्रकाशित, आनन्दाश्रममुद्रणालयद्वारा १८९४ ईशवीये, शिवदत्तशर्मभिः । सत्यप्यस्मिन् पालकाप्यस्य बहुधा वर्णनेऽयं ग्रन्थः पालकाप्यप्रणीत एव । यथा महाभारतादिषु व्यासादीनां वर्णनम्, तथैवात्र पालकाप्यस्यापि । अस्मिन् ग्रन्थे महारोगक्षुद्ररोगशल्योत्तरस्थानमिति कृत्वा चत्वारि स्थानानि । तत्र प्रथमे महारोगस्थानेऽष्टादशाध्यायाः । अस्मिंश्च पाकलस्कन्दपाण्डुशोथनेत्ररोगादयः प्रामुख्येण सनिदानमुपदिष्टाः । द्वितीये क्षुद्ररोगस्थाने च विषपरीक्षा सर्पदष्टबालचिकित्सादयो द्विसप्ततिरध्यायाः । तृतीये च शल्यस्थाने सद्यः शताध्याये क्षरशक्त्यृष्टितोमराद्यैः शस्त्रैः क्षतानां हस्तिनां चिकित्सार्थं बहवो योगा निर्दिष्टाः सन्ति । एवं चात्र गर्भावक्रान्त्यध्यायः, गजलक्षणादीनि शल्यकर्मादीनि च विस्तरेणोपदिष्टानि सन्ति । अन्ते च चतुर्थे उत्तरस्थाने गजानां दिनचर्या, ऋतुचर्या, अञ्जनदानम्, क्षीरदानम्, मद्यदानम्, रसायनादीनां प्रयोगः, गजशालानिर्माणादयो विषया पालकाप्यस्यायुर्वेदे प्रामुख्येन सन्ति । स चायं सर्वथा पूर्णो ग्रन्थ एकाक्येव समस्तमपि गजायुर्वेदं स्वाङ्के बिभर्ति ।

**गजशास्त्रम्**—इदमपि पालकाप्यनाम्ना प्रकाशितम् १९५८ ईशवीये सुब्रह्मण्यशास्त्रिभिस्तञ्जौरनगरात् । अत्र च हस्त्यायुर्वेदस्यैव श्लोकाः पाठभेदेन सन्ति, तथा च तादृशो

१. तत्रैव ३।८।३०३ ।
२. तत्रैव ३।८।२९८ ।
३. हरिहरचतुरङ्गम् ११७३ ।
४. गजशास्त्रे पृ० ६९ ।
५. ब्रह्माण्डपुराणे ३।३४९ ।
६. महाभारते सभापर्वणि ५।१२१ ।

विस्तारोऽपि नास्ति, अन्यच्चास्मिन् ग्रन्थे व्यासवैशम्पायनादीनां शास्त्रस्य सङ्ग्रहः, तथा चेदं गजशास्त्रस्य संकलनमेव प्रतिभाति। अत्र रोगाणां चिकित्सादिकं नास्ति। चिकित्साशास्त्रस्य चैका पाण्डुलिपिस्तत्रत्ये पुस्तकालये वर्तत इति सम्पादकेन सूचितम्। अत्र कानिचित् सम्यग् बोधकराणि चित्राण्यपि मुद्रितानि सन्ति।

मातङ्गलीला—अस्य प्रकाशनम् १९१० ईशवीये त्रावणकोरनगराद् जातम्, सम्पादनं गणपतिशास्त्रिभिर्व्यधायि, अयं ग्रन्थश्चिकित्साऽतिरिक्तं सर्वमपि गजशास्त्रं सुस्पष्टं प्रतिपादयति।

हरिहरचतुरङ्गम्—गोदावरमिश्रप्रणीतोऽयं ग्रन्थो रामनाथशास्त्रिभिः सम्पादितः, १९५० ईशवीये वर्षे मद्रासनगराद् प्रकाशितः। तथा चात्र गजरथाश्वपत्तिधनुर्विद्यानीतियुद्धपरिच्छेदाः। स चायं ग्रन्थो विद्यानुरागिभिरवश्यमवलोकनीयः।

अन्येषु पुस्तकेषु च प्रसङ्गप्राप्तं गजशास्त्रम्, यथा अग्निपुराणे २८७ अध्याये, गरुडपुराणे २०१ अध्याये, ब्रह्माण्डपुराणे ३।७ अध्याये, युक्तिकल्पतरौ गजयुक्तिः, कौटलीयार्थशास्त्रे अधि० २, प्रकरणे ४७, ४८, शुक्रनीतौ ४ अध्याये।

## हस्तिनां जातयः

भद्रः, मन्दः, मृग इति तिस्रो जातय आसन्, तेषामाकृतौ प्रमाणे चापि भेदः, किन्तु निश्चप्रचमेतद् यद् भद्रादीनां शुद्धा जातिः पालकाप्यस्य प्रवचनकालेऽपि दुर्लभा एवासीत्।[१] एताभ्यस्तिसृभ्यो जातिभ्यो व्यतिरिक्ता मिश्रजातिरेव तदानीमासीत्, अद्यापि तस्या एव स्थितिः। एतस्या मिश्रजातेरपि भद्रमन्द-मृगमन्द-भद्रमृगादयोऽसंख्याका भेदाः शास्त्रकारैर्निर्णीताः। शास्त्रकारेषु केनचित् तिस्रो जातयः, केनचित् षट्, केनचित् षोडश, एवमेव केनचिदष्टादशभेदाः प्रदर्शिताः। अन्ये च अनन्ता जातय इति ब्रुवते। अत्रेदं द्रष्टव्यं यत् सर्वेऽपि मिश्रा एव गजाः, तदा अस्मिन् गजे भद्रगजस्येमान्यङ्गानि, इमानि मन्दस्य, इमानि मृगस्येति विचारार्थमेव भद्रादिज्ञानमावश्यकम्। तथा च पूर्वोक्तास्तिस्रो जातय एव, तेषामेव लक्षणपरिज्ञानमावश्यकम्। तेषां लक्षणानि शास्त्रत एवाध्येयानि, योज्यानि च गजाङ्गेषु।

देशभेदेन गजानामाकृतौ भेदो भवति, किन्तु केवलेन देशभेदेनैव जातिभेदो न भवति।

न　वनज्ञानमात्रेण　भद्रादिज्ञानसम्भवः।
सङ्कीर्णा जातयो यस्मात् सर्वाः सर्वत्र वारणाः ॥[२]

इदं तु वयं स्वीकुर्मो यद् भद्रमन्दमृगजातिषु सर्वेषामेव गजानां संग्रहो न जात इति, यथा अफ्रीकादेशीयो गजो नैतासु जातिसु संगृहीतो भवति, नापि पाषाणीभूता मैमथजाते-

१. हस्त्यायुर्वेद ३।८।२०४।
संकीर्णाः सुलभाः शुद्धा दुर्लभास्तु मृगादयः।
२. हरिहरचतुरङ्गम् २।६१।

र्गजा एभिर्लक्षणैर्लक्षयितुं शक्याः, अफ्रीकादेशीयस्य गजस्यावयवसंस्थानभिन्नत्वेन मैमथगजस्य परिमाणाधिक्येन च भेदात्।

अन्यच्च गुणकर्मानुसारं गजानां ब्राह्मणादयो वर्णा भवन्ति, साङ्कर्यमपि। कुत्रचिच्च ब्राह्मणशूद्रादयो वर्णाः, यक्षराक्षसमनुष्यादयश्च सर्वे सत्त्वशब्देन व्यवह्रियन्ते। यथा ब्राह्मण-सत्त्वो यक्षसत्त्व इति। एवं हि शास्त्रेषु गुणा दोषाश्च बहुधा वर्णिताः सन्ति। दोषा गुणाश्च प्राय आवर्तनखदन्ताङ्गेषु, ते चात्र विस्तरभयान्नोच्यन्ते, जिज्ञासुभिस्तत्र शास्त्रेष्वेव द्रष्टव्याः। पालकाप्यतिरिक्ताः सर्वेऽपि गजशास्त्रग्रन्था गजलक्षणविषया एव।

'गम्भीरवेदी'शब्दोऽस्माभिः काव्येषु, अन्यत्र चावश्यं श्रुतो भवेत्, तदप्यत्र वेदितव्यं यदिदमपि गजानां स्वभाववर्णनमेव। गजानां च सप्तधा वेदनम्—

अत्यर्थोक्तानगम्भीरान्वर्थप्रत्यर्थकर्कशैः।
सिद्धेनापि च नागानां वेदनं सप्तधा विदुः॥[१]

वने निवसतां गजानां रोगा न जायन्त इत्युक्तं प्राक्, अत्र काश्चन प्रमुखान् रोगान् दर्शयामः। ग्राममानीतानां गजानां दोषवैषम्याद् वातिकाः, पैत्तिकाः, श्लैष्मिकाः, सान्निपातिकाश्च रोगाः प्रामुख्येण भवन्ति, ते च सर्वेऽपि व्याधय आध्यात्मिकागन्तुकभेदेन द्विविधाः सन्ति। भगवता पालकाप्येन महारोगस्थाने प्रथमो रोगः पाकल एव स्मृतः, अयं च पाकलो बहुभिः कारणैर्गजेषु समुत्पन्नो ज्वर एव। अत्रैदेमेव वैशिष्ट्यं यद् ज्वरं मनुष्यादन्यः कश्चन प्राणी न सहते, गजास्तु खल्वान्तरोष्मत्वाद् ज्वरमिमं न सहन्ते। ज्वरमधिकृत्य कियन्तः शब्दाः संस्कृतभाषायाम्, पशुपक्षिचिकित्सा च कीदृश्यासीत्? अत्र निदर्शनार्थं पालकाप्यग्रन्थे पठितानि ज्वरनामानि गृह्णीमः।

एष एक एव खलु भो ज्वरो नरेषु, हयेष्वभितापः, खरेषु स्वारेकः, गोष्वीश्वरः, उष्ट्रेष्वालसकः, व्याडेष्वाक्षिकः, प्रलापकोऽजादिषु, सरीसृपेऽषु कण्णीपः, हारिद्रको महिषेषु, मृगरोगो मृगेषु, पक्षिष्ववतापः, पतङ्गेषु शुनस्त्वलर्कः, मत्स्येष्विन्द्रमदः, गुल्मेषु गुच्छकः, औषधिवनस्पतिषु ज्योतिष्कः, माल्येषु पर्वकः, ऋषभको नलिनीषु, धान्येषु चूर्णकः, ललः कोद्रवेषु, मधूकः शाकेषु, भूम्यामूषरः, अप्सु नीलिकाः, गजेषु पाकलः।[२] स चायं पाकलो दशधा शुद्धबालादिभेदेन। पचतीति पाकल इत्यस्य निरुक्तिः। अयं च व्याधिः झटित्येव यत्नेनोपचर्यः। एतेषां सर्वेषामेव पाकलानां लक्षणानि, निदानम्, व्यवस्था च विस्तरेण शास्त्र-कृतोक्तम्, अन्ते च पञ्चत्रिंशदध्याये पाकल एव गजानां मरणे मुख्यो हेतुरित्युपपादितम्।

एवं हि स्कन्दनामक एकोऽन्योऽपि रोगो धातुवैषम्यादेव जायमानो महारोगेषु पठ्यते[3]। जीवनस्य स्कन्दनात् = शोषणात् स्कन्द इत्युच्यते, स च त्रिधा। तत्र व्याविद्ध-स्कन्दनामकः प्राणहरो रोगस्तिर्यग्योनिषु जायते।

१. मातङ्गलीला, पटलः ८।१८।
२. हस्त्यायुर्वेदः, महारोगस्थाने पाकलाध्यायः ९।
३. हस्त्यायुर्वेदे १।२।२१७-२१८।

## पादरोगाः

एतेऽपि महारोगेषु पठ्यन्ते । अत्रेदं ध्येयम्—पादरोगा बाहुल्येन गजेष्वेव भवन्ति, ते चान्येषां वनचारिणां न जायन्ते । इमांश्च केचन विंशतिः, केचन त्रिंशद् मन्यन्ते । ते पादरोगाः प्रायो वायुप्रकोपसमुत्पन्ना नखप्रदेशेषु बाहुल्येन भवन्ति । गजपरिचर्यादौ पादसेकादेः स्नेहदानविधेश्च प्राधान्यं पादरोगाणाम् । अन्येषां व्रणादीनां नाशाय जलमपूर्वमौषधम्, "धातुप्रसादं क्षिप्रं तु क्रीडतां जायतेऽधिकम्, हस्तिनामुदकं प्राणाः ।"

आयोजनशतं सार्धं विचरन्तोऽपि कुञ्जराः ।
निर्वहन्ति न सीदन्ति सलिलेनैव केवलम् ॥
यदा न परिषिच्यन्ते कर्दमोदकसीकरैः ।
भवन्ति कुष्ठिनोऽन्धाश्च हस्तिनस्तेन हेतुना ॥[१]

गजाश्च तावत् कृष्णवर्णाः, आन्तरोष्माणः, अतो जलमेव जीवनं तेषाम् ।

अन्यच्च शास्त्रेषु गजग्रहणशिक्षादीनां विविधा उपायाः प्रदर्शिताः, तत्सर्वमपि विस्तरभयान्नात्रोच्यते, विशेषजिज्ञासुभिः शास्त्राण्यवलोकनीयानि ।

## प्रयोजनम्

अद्य खलु सेनायां गजा नोपयुज्यन्ते, अतोऽनेन शास्त्रेण किमिति प्रश्न उदेति । तत्र प्रथमं प्रयोजनमस्य शास्त्रस्येदं वेदितव्यं यद् गजाः केवलं भारते अफ्रीकादेशे चैव सन्ति । वनान्यद्यापि छिद्यन्त एव, अतोऽस्य विशालतमस्य जन्तोः सुरक्षार्थं सुरक्षितान्यरण्यानि स्युः । तत्र च पालकाप्यानुसारं वृक्षारोपणम्, तडागनिर्माणं भवेत्, येन तत्रेमे सुखेन निवसेरन् । आसामप्रान्ते भारवाहनादिकार्यमद्यापि गजाः कुर्वन्त्येव । यत्र नदीकूलेषु वालुकासु राजमार्गा न सन्ति, तत्र गजा नदीधारायां काष्ठानि प्रक्षेपणार्थं प्रापयन्ति, अरण्येषु च ट्रकादिवाहनेषु काष्ठानां न्यासाय गजा क्रेनयन्त्रस्य कार्यं कुर्वन्ति, नगरेषु मनोरञ्जनार्थं वाहनार्थमपि गजाः पालयितुं शक्याः, बाला युवानश्च सोत्साहं गजपृष्ठमारुह्य भ्रमणार्थं गन्तुमुद्युक्ताः स्युः, वनान्यपि गजपृष्ठमारुह्यैव भ्रमणीयानि, अन्येऽपि विविधाः प्रयोगा गजानां सम्भवन्ति, अतोऽस्य जन्तोः सुरक्षार्थं शास्त्रमिदमध्येयं प्रयोज्यं चेति ।



# गरुड़पुराणविषयानुक्रमणी

## सङ्कलयिता—पं० मध्वाचार्यः

### ( पूर्वानुवृत्ता )

—क्रमशः

# श्रद्धाञ्जलयः

'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः'

'भूतानि कालः पचतीति वार्ता'

को नाम कालस्य करालज्ज्वालावलीढेन कवलनप्रवृत्तेन क्रमेणाप्रभावितो भवेदिह।

सकष्टातिशयं विज्ञापयामो वयं यद् धर्मशास्त्रव्यवस्थागूढग्रन्थिनिर्णयनिर्णायका न्यायशास्त्रैकमूर्तयः सारल्यसुलभप्रतीका वाराणसेयसंस्कृतविश्वविद्यालयस्य न्यायसांख्ययोग-राजनीतिविभागप्रतिष्ठितागणितच्छात्रविद्यादानावदातहृदयाः सम्मानितपण्डिताश्च मात्सर्या-दिदोषततिप्राप्तस्वातन्त्र्या विधिवदधीतवेदवेदाङ्गविरहितकल्मषाः प्राचीनभारतीयसंस्कृति-संस्कारसंस्कारकाः शास्त्रार्थसभावनकेशरिणस्तत्रभवन्तो विपश्चिदपश्चिमा विद्वद्वरेण्याः काशिक-विद्वन्मण्डलीमण्डना मान्या प० श्रीहरिरामशुक्लमहाभागा अस्माकं महद्दौर्भाग्येन भुवमिमं विरहय्य सं० २०२८ तमपौषशुक्लतृतीयतिथौ भगवच्छङ्करसायुज्यं प्राप्त इति।

मान्यानामेषां जनिरभवत् किल श्री प० रामशास्त्रिशुक्लमहाशयानां गेहे सं० १९६६ तमाषाढकृष्णाष्टम्यां तिथौ वाराणस्याम्। पवित्रेयं वाराणसी विद्वन्मण्डली-मणिशाणोल्लेखनिकषकल्यानां नित्यकर्मकृतिनिरतानां श्रीमतामुपस्थित्या प्रौढेनाध्यापनेन दैनन्दिनभाविन्या भगवत्पूजनादिक्रियया च नितरां प्रसिद्धा समास्ते।

निजावासागतच्छात्रपदसञ्चारैश्च तद्वीथिकजनमण्डलीमनोहंसान् नितरां मोदसङ्कुलान् कृत्वाध्ययनाध्यापनतपःप्राप्ततेजस्करवयश्रेमे समाप्तच्छात्रसंसत्पद्मविकसनक्रियाः सान्ध्य-समय इवालोकेनान्यं लोकं प्रकाशयितुं लोकान्तरङ्गत इति मन्ये। ते वाराणसेय-संस्कृतविश्वविद्यालये सर्वच्छात्रप्रियाः पाठने च सदैव व्यवस्थितचेतस इति वाराणसी समुररीकरोति।

तेषामसङ्ख्यशिष्याणां संख्यां को नाम गणयितुं शक्येत। तेषु सन्ति प्रमुखाः प० श्रीजनार्दनशास्त्री खुण्टे, श्रीशङ्करानन्दो ब्रह्मचारी, श्रीविश्वनाथशास्त्री दातारः, श्रीगजाननशास्त्री मुसलगांवकरः, श्रीनारायणशास्त्री द्राविड इत्यादयः।

श्रीमन्तोऽत्रभवतां श्रीमतां पण्डितराजानां राजेश्वरशास्त्रिद्रविडमहाभागानां मूर्धन्येषु शिष्येषु प्राधान्यमाप्ताः। श्रीशुक्लमहाभागा द्राविडमहाशयानां सर्वमपि शिष्यस्नेहराशिं जग्राहेति नातिशयोक्तिः। अत एव सर्वास्वपि शास्त्रार्थसभासु श्रीद्राविडमहाशया एतान् एव महाभागानग्रेसरान् कृतवन्तः। पण्डितराजानामाज्ञानुसारमेवैते १९५९ ईसवीयहायने प्रथमोपकुलपतिमहाभागैरादित्यनाथझामहाशयैः प्रार्थितः सन्नेवाध्यापनाय स्वीकृतिं ददुः

एषां वैदुष्यं नासीद्वाराणस्यामेव प्रथितमपि तु सर्वस्मिन्नपि भारते विदेशेऽपि च। एकवारमपि तेषां शास्त्रार्थसरणिमवलोक्य यः कोऽपि प्रभावितोऽभवदात्यन्तिकैकान्तिक-रूपेण। तैश्च प्रौढटीकाग्रन्थनिर्माणोऽपि कृतः। न्यायसिद्धान्तमुक्तावल्या दिनकरीरामरुद्रीति-नामकटीकाद्वये महत्त्वपूर्णानामंशानां पूर्तिः श्रीशुक्लमहाभागैः कृता टिप्पण्यादिभिः।

एषां समग्रभारतख्यातवैदुष्यविलोकनमकारि १७।७।६८ ईशवीयहायन एषां षष्ठिवर्षापनमहोत्सवावसरे सर्वैरपि वाराणसीस्थैर्वाह्यीयैश्च। सम्पूर्णभारतागतसंस्थाप्रतिनिधिकृतमाल्यार्पणपूर्वकपूजनस्य दृश्यमद्यापि समग्रपण्डितमण्डलनेत्रमानन्दयति।

एतेषां वैदुष्यं चतुरस्रमासीत्। अत एव तेऽध्यापनशास्त्रार्थाभ्यां साकमेव प्रौढलेखनकार्येऽपि मान्या आसन्। अधोलिखितैः प्रौढग्रन्थटीकाप्रकाशनैश्च सुस्पष्टमाभाति तेषां चित्रलेखनचाकचक्यम्—

१. न्यायसिद्धान्तमुक्तावली, दिनकरीरामरुद्रीसहिता ( सम्पादिता )
२. सांख्यतत्त्वकौमुदी ( स्वोपज्ञसुषमाटीकासहिता ) ( सम्पादिता )
३. सिंहव्याघ्रलक्षणम् ( जागदीशी ) स्वोपज्ञटीकासहितम् ( सम्पादितम् )
४. आत्मतत्त्वविवेकः ( सम्पादितः )

एतदतिरिक्तमेतेषामसंख्याः शोधपूर्णा निबन्धा विविधासु पत्रपत्रिकासु प्रकाशिताः, यैरसंख्या विद्वांसश्छात्राश्च लाभान्विता समभवन्। मान्या ह्येते स्वजीवनस्यान्तिमे चरणे नव्यन्यायीयान् पारिभाषिकपदार्थानाश्रित्यैकस्य महत्त्वपूर्णस्य ग्रन्थस्य लेखने व्यस्ताश्चासन्, यस्याधिकांशो विलिखितः सन् कमपि प्रियं जनं मुद्रणीयां प्रतिं कर्तुं प्रदत्तः पुनरलभ्य एव जातः। एष महान् खेदस्य विषयः।

एते वाराणसेयसंस्कृतविश्वविद्यालयस्य प्राचीनराजशास्त्रार्थशास्त्रविभागस्याध्यक्षपदात् १९७० ईशवीयहायनस्याक्तूबरमासेऽवकाशमापुः। पश्चाच्च वाराणसेयसंस्कृतविश्वविद्यालयीयया शिष्टविद्वत्परिषदा ह्येते सम्मानितपण्डितमण्डल्यामुल्लिखिताः सम्माननार्थम् सम्मानितपण्डितरूपेण। किन्तु छात्राणां विदुषां सहृदयानाञ्च महद्दौर्भाग्यादेतेषां २०-१२-७१ ईशवीयहायनेऽदर्शनमभूल्लोकेऽस्मिन्निति महत्खेदकरम्।

आशासे यत्तेषां द्वावपि पुत्रौ—श्रीबलिराम-चन्द्रशेखरशुक्लौ न्यायशास्त्रस्य वंशप्राप्तं प्रकाण्डं पाण्डित्यं रक्षिष्यन्तीति।

एते शब्दप्रसूनोत्करश्रद्धाञ्जलयोऽस्माकं तेषां प्रीणनाय भवन्त्विति।

व्रजभूषणत्रिपाठी
प्रकाशनाधिकारी
वाराणसेयसंस्कृतविश्वविद्यालयः

——

# चयनिका

श्रीउमाशङ्करत्रिपाठी

अनुसन्धानसहायकः, वाराणसेयसंस्कृतविश्वविद्यालयः,

## अवतरणिका

बहुधा विचारितान्यपि शास्त्राणि पुनः पुनर्विचारमपेक्ष्यन्त एव। अत एव सर्वेष्वपि शास्त्रेषु विचारपरम्पराया आरम्भतः क्रमः प्रचलति। भारतीयैर्विद्वद्भिर्या विचारशृङ्खलोद्भाविता सा वेदात् परं वेदाङ्ग-दर्शन-पुराणेतिहास-धर्मशास्त्रागमादिरूपेण बहुधा भिन्ना भारतेऽन्यत्र च समादरं भजति। अधुनाप्यनेके विद्वांसो वेदोपवेद-निरुक्त-छन्दःशास्त्र-व्याकरण-पुराण-धर्मशास्त्र-ज्योतिष-कर्मकाण्ड-वैशेषिक-न्याय-सांख्य-योग-मीमांसा-वेदान्त-बौद्धदर्शन-जैनदर्शनागम-साहित्य-राजशास्त्रार्थशास्त्र-समाजशास्त्रेतिहासादिविषयेषु नवीनां दृष्टिम्, क्वचित् प्राचीनविचारपरम्पराणां समर्थनमूलिकाम्, क्वचिच्च पाश्चात्त्य-विचारधारामवलम्ब्य विविधैस्तर्कैः प्राचीनविचारभित्तिमुन्मूलयितुं बुद्धिप्रधानमनुसन्धानं कुर्वन्तः पत्रपत्रिकादिषु प्रचारयन्तश्च दृश्यन्ते। तेषां युक्तायुक्तत्वविवेचनं कर्तुमुद्युक्तेभ्योऽनुसन्धातृभ्यः साहाय्यप्रदानाय इदमावश्यकं वर्तते यत् तेषु तेषु शास्त्रेषु तत्तद्विद्वद्विचारितास्ते ते विषया दृष्टिपथमवतरेयुः, तेषु च गम्भीरं युक्तिश्रुत्याचारमूलकं विचारं कर्तुं प्रभवेयुरिति सञ्चिन्त्य वाराणसेयसंस्कृतविश्वविद्यालयस्यानुसन्धानविभागेन प्रयत्नोऽयमुपक्रान्तः। तत्र प्रथममाङ्गलभाषानिबद्धानां तत्तत्पत्रिकासु प्रकाशितानामनुसन्धानात्मक-लेखानां विषय-भाषा-लेखक-पत्रिका-प्रकाशनसंस्थाननिर्देशपुरस्सरं संग्रहात्मिका चयनिकेह प्रदीयते। अत्र प्रथमं केवलं "दि जर्नल आफ दि रायल एशियाटिक सोसाइटी, लन्दन" इति पत्रिकायाः १ बन्धतः (वाल्यूम) १०२ बन्धं (१८३४-१९७० ई०) यावत् प्रकाशितानां लेखानां वर्णक्रमानुसारेण चयनिका प्रकाशमासादयत्यस्मादङ्कात्क्रमशः। मन्येऽनेन कर्मणा अनुसन्धातॄणां किमपि साहाय्यं भविष्यति, येनाहं नैजं परिश्रमं सफलं मन्ये।

## 'दि जर्नल आफ दि रायल एशियाटिक सोसाइटी, लन्दन'

इति पत्रिकायां; १ बन्धात् १०२ बन्धं ( १८३४-१९७० ईसाब्दं च ) यावत्

# प्रकाशितविषयाणां सूची

**वेदः**

१. आदि-ग्रन्थस्य सूक्तानां व्यवस्थाकरणविवेचनम्
( दि अरेञ्जमेण्ट आफ दि हिम्स् आफ दि आदिग्रन्थ-The Arrangement of the Hymns of the Adigranth. )
—फ्रेडरिक पिन्काट्, एम. आर. ए. एस्. Frederic Pincott, M. R. A. S.
[ न्यु सिरीज, बन्धः १८,१८८६ ], पृ० ४३७-४६७ ( पृ० ३१ )

२. ऋग्वेदसूक्तानां व्यवस्थाविवेचनम्
( आन दि अरेञ्जमेण्ट आफ दि हिम्स आफ दि ऋग्वेद-On the Arrangement of the Hymns of the Rigveda. )
—फ्रेडरिक पिनकाट, एम्. आर. ए. एस्. Frederic Pincott, M. R A. S.
[ न्यु सि०, बन्धः १६,१८८४ ], पृ० ३८१-३९९ ( पृ० १९ )

३. ऋग्वेदस्य पौराणिकाध्ययननिरूपणम्
( माइथालोजिकल स्टडीज इन दि ऋग्वेद-Mythological Studies in the Rigveda. )
—ए. ए. मैक्डोनेल, एम्. ए., A. A. Macdonell, M. A,
[ न्यु सि०, बन्धः २७,१८९५ ], पृ० १६५-१८९ ( पृ० २५ )

४. ऋग्वेदस्य प्रथममण्डलविवेचनम्
( दि फर्स्ट मण्डल आफ दि ऋग्वेद-The First Mandala of the Rigveda. )
—फ्रेडरिक पिनकाट, एम्० आर. ए. एस्. Frederic Pincott, M. R. A. S.
[ न्यू सि०, बन्धः १६,१८८७ ], पृ० ५९८-६२४ ( पृ० २७ )

५. ऋग्वेदीयप्रथमग्रन्थस्य षष्ठसूक्तनिरूपणम्
( दि सिक्स्थ हिम आफ दि फर्स्ट बुक आफ दि ऋग्वेद The Sixth Hymn of the First Book of the Rigveda. )
—प्रोफेसर मैक्समूलर, एम. ए., आनरेबुल एम्. आर. ए. एस्. Professor Maxmullar, M. A., Hon. M. R. A. S.
[ न्यू सि०, बन्धः ३ भा० १,१८६८ ], पृ० १९९-२४० ( पृ० ४२ )

—क्रमशः

रजिस्टर्ड न्यूजपेपर्स एक्ट के नियम के अन्तर्गत

# विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. मुद्रक का नाम | श्री घनश्याम उपाध्याय |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, मुद्रणालय, वाराणसी |
| ४. प्रकाशक का नाम | श्री भागीरथप्रसाद त्रिपाठी |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय वाराणसी |
| ५. सम्पादक का नाम | श्री भागीरथप्रसाद त्रिपाठी |
| राष्ट्रियता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी |
| ६. स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी |

मैं श्री भागीरथ प्रसाद त्रिपाठी घोषित करता हूँ कि उपरि लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर

भागीरथ प्रसाद त्रिपाठी

संचालक

अनुसन्धानसंस्थान

वा० सं० वि० वि०, वाराणसी–२

पञ्जीकरण संख्या—६९८१।५७

# सारस्वती सुषमा

## वाराणसेय-संस्कृत-विश्वविद्यालय-पत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।
२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।
३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।
४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।
५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।
६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्गलग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।
७. 'प्रस्तोता, वाराणसेयसंस्कृतविश्वविद्यालय, वाराणसी' इति संकेतेन ( 'बैंकड्राफ्ट' अथवा 'पोस्टल आर्डर' इत्येतेनैव ) मूल्यं प्रेषणीयम्।
८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादक, सारस्वती सुषमा, वाराणसेय-संस्कृत-विश्वविद्यालय, वाराणसी—२' इति सङ्केतेन विधेयः।

प्रकाशकः—सञ्चालकः, अनुसन्धानसंस्थानम्, वाराणसेय-संस्कृत-विश्वविद्यालयः, वाराणसी।
मुद्रकः—श्री घनश्यामोपाध्यायः, वाराणसेय-संस्कृत-विश्वविद्यालयीय-मुद्रणालयः, वाराणसी।
मु० सं०—७/७३